सरस्वतीभवन-ग्रन्थमाला

[१२०]

म० म० हाराणचन्द्रभट्टाचार्यविरचिता

# कालसिद्धान्तदर्शिनी



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

SARASVATĪ BHAVANA GRANTHAMĀLĀ

[Vol. 120]

# KĀLASIDDHĀNTADARŚINĪ

OF

M. M. HĀRĀṆACANDRA BHAṬṬĀCĀRYA

EDITED BY

GAURINATH SASTRI
Vice-Chancellor
Sampurnanand Sanskrit University




VARANASI
1984

**Published By :—**
**Director,** Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi



Available at :—
**Sales Department,**
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi—221002



First Edition : 1100 Copies
Price : Rs. 25.00



Printed By :—
**Ratna Printing Works**
B 21/42 A, Kamacha
Varanasi—221010

सरस्वतीभवन-ग्रन्थमाला
[ १२० ]

म० म० हाराणचन्द्रभट्टाचार्यविरचिता

# कालसिद्धान्तदर्शिनी

सम्पादक :
**श्रीगौरीनाथशास्त्री**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य




वाराणस्याम्

२०४० तमे वैक्रमाब्दे १९०५ तमे शकाब्दे १९८४ तमे खैस्ताब्दे

॥ श्रीः ॥

# किमप्यस्मदीयम्

फणिपतिभणितीनां सारसर्वस्ववेदी
समजनि शिवसूनुः कोऽपि नागेशभट्टः ।
जगति यदुदिताभिः सन्निबन्धप्रभाभिः
सुरभयति दिगन्तान् वाङ्मयः कल्पवृक्षः ॥ १ ॥

तदनु गुणगणाढ्यः पायगुण्डेकुलाब्धेः
सितकर इव शिष्यस्तस्य विद्यैकतानः ।
समभवदुदितश्रीर्भूरिलेखानुबन्ध-
प्रमुदितबुधवृन्दो बालभट्टाभिधानः ॥ २ ॥

तच्छिष्यक्रमतो मतो मतिमतां जातो मनीषावशा-
न्नव्यव्याकरणार्णवप्रमथने बद्धादरो मन्दरः ।
काशीनाथसुधीस्तदीयचरणध्यानावधानैकधी
राजारामबुधाग्रणीः शिवपुरे शिष्यो विशिष्यार्चितः ॥ ३ ॥

विश्वेश्वरः स्वयमुपात्ततनुस्तदीयं
शिष्यत्वमाप निखिलागमरक्षणाय ।
बाल्येऽपि यत्प्रतिभया वशितान्तरङ्गै-
र्नामाऽभ्यधीयत च बालसरस्वतीति ॥ ४ ॥

दिङ्मूलचुम्बितपदाम्बुरुहेषु तस्य
गङ्गाधरप्रभृतिशिष्यधुरन्धरेषु ।
प्राथम्यमाप विमलप्रतिभावतारो
मिश्रः क्षितौ शिवकुमारधरामरेन्द्रः ॥ ५ ॥

प्रतिवादिशैलहृदयं वाग्विशिखैर्विदलयन् सहसा ।
विबुधचमूसेनानी रेजे श्रीशिवकुमारशास्त्रिवरः ॥ ६ ॥

तद्भक्तिपूतहृदयः सदयो जनेषु
हाराणचन्द्र इति विश्रुतनामधेयः ।
सांयात्रिकः सकलशास्त्रमहार्णवेषु
मान्यो गुरुर्जयति मे रचनावदान्यः ॥ ७ ॥

शास्त्राम्बुधेर्विविधरत्नमुपाहरन्त्यो
हाराणचन्द्रकृतयः कृतिभिर्नमस्याः ।
तास्वेव शास्त्रनिवहोदितकालतत्त्व-
सिद्धान्तरीतिरियमश्चति मानभूमिम् ॥ ८ ॥

भूयः परिष्कृततनुः कृतिरेतदीया
वैदुष्यरत्नपरिरक्षणसादरेण ।
नीता प्रकाशपदवीं प्रणतेन गौरी-
नाथेन तच्चरणपद्ममधुव्रतेन ॥ ९ ॥

—: :—

# निवेदना

'कालसिद्धान्तदर्शिनी'नामा निबन्धोऽयं सम्प्रति प्रकाश्यते।

निबन्धस्यास्य केचनांशाः कलिकातानगर्याः प्रचरन्त्यां 'संस्कृतसाहित्यपरिषद'-भिधानायां मासिकसंस्कृतपत्रिकायां कतिपयवर्षेभ्यः पूर्वं प्रकाशिता आसन्। साम्प्रतं प्रकाश्यमानोऽयं निबन्धः परिवर्त्तनपरिवर्द्धनाभ्यां रूपान्तरमिव प्राप्त इति निवेदयन्न मृषाभाषित्वमात्मनो मन्ये।

कालव्यवहारोऽयं शयनभोजनादिव्यवहार इवाऽऽपण्डितेभ्य आ च गोपालकेभ्यः सर्वेषामेव मनुष्याणामाबाल्यं प्रसिद्धः। तस्य व्यवहारस्य किं मूलमिति विचारणायां प्रवृत्तैः पूर्वैर्मनीषिभिः स्वमतिसिद्धाः सिद्धान्तभेदाः स्वीयग्रन्थेषु निबद्धाः। तेषु पञ्चाशतोऽप्यधिकानि मतानि निबन्धेऽस्मिन् संगृह्य सप्रमाणं दर्शितानि। शास्त्राणां वैपुल्याद्, आचार्याणां विचारसरणीनां विभिन्नत्वाद् मदीयबुद्धिदैन्याच्च कालविषयकाः सिद्धान्ता निरवशेषमत्र सङ्गृहीता इति वक्तुं नोत्सहे। परन्त्विदमत्रावश्यं वक्तव्यम्—यानि मतानि निबन्धेऽस्मिन् संगृहीतानि ततोऽतिविलक्षणं किञ्चिन्मतं प्रायेण न वर्त्तते इति।

अत्र कालविषयकमतविशेषसङ्ग्रहावसरे क्वचित् क्वचित् प्रसङ्गात् तन्मतसिद्धानामपरेषामपि पदार्थानां निरूपणा कृता। तेन तन्मतपरिचयहीनानामपि पाठकमहोदयानामयं ग्रन्थः सुगमः स्यादिति सम्भावये।

शास्त्रेषु सर्वत्र कालविषयकाः सिद्धान्ताः स्पष्टतया नाभिहिता इति विजानन्त्येव बहुश्रुता विपश्चितः। तादृशस्थलविशेषेषु सिद्धान्तनिष्कर्षनिरूपणायां यथामति विहितः प्रयासः सफलतामुपगतो न वेति विशये विमलमतयो विद्वांस एव निर्णयाय प्रार्थ्यन्ते।

शास्त्राणां दुरवगाहतयाऽज्ञतया च मदीयया बहून्यत्र स्खलितानि सञ्जातानीति प्रकटयितुं न लज्जे। सहृदयाग्रेसरैः पाठकमहाशयैः परिलक्षितानि स्खलितानि मदीयप्रबोधसम्पादनाय सानुग्रहमवश्यं सूचनीयानीति भूयो भूयः सविनयं समभ्यर्थये।

अक्षरयोजकानामनवधानेन मदीयदृष्टिदोषेण मुद्रायन्त्रघर्षणाद् मात्राणामन्यथाभावेन चात्र संवृत्ता अशुद्धयो विज्ञैः पाठकमहाशयैः स्वयमेव शोधयितुं शक्या इति तत्राभिनिवेशातिशयो न प्रदर्शितः।

यैः प्रीतिस्निग्धहृदयैर्महाशयैः प्रोत्साहनेनानुकूल्यसम्पादनेन च निबन्धस्यास्य प्रकाशनायाहं प्रवर्त्तितः, तेभ्यः सप्रश्रयाननेकान् साधुवादान् निवेदये। इति।

कलिकातानगर्याम्
१९९८ तमे वैक्रमवर्षे
आषाढशुक्लद्वितीयायाम्

विदुषामनुचरस्य
श्रीहाराणचन्द्रभट्टाचार्यस्य

## PREFACE

We feel very happy that the University reprints the highly philosophical book Kāla-siddhānta-darśinī, by our revered Guruji, Mahāmahopādhyāya Haran Chandra Bhattacharyya of hallowed memory. It has been our endeavour to rearrange the sections in the interest of scholars working in the fields of their study and research. The work was published in Calcutta by the author himself when he was associated, as a Lecturer in Pāṇini Vyākaraṇa, with the Government Sanskrit College.

The work is now published in the Sarasvati Bhavana Granthamālā Series.

**Gaurinath Sastri**

Mahashivaratri
29th February, 1984.

## FOREWORD

Pandit Haran Chandra Bhattacharyya has rendered a valuable service to the students of Sanskrit philosophical literature by his compilation of a highly interesting booklet on the views of the different schools of Indian Philosophy on Kāla or Time. Great credit is certainly due to the writer, whose erudition and versatility are known to the world of Sanskrit scholarship and Indian Philosophy, for his faithful rendering and clear exposition of the different views.

A careful study of the history of philosophical doctrines in the country would reveal the fact that thinkers have had apparently divergent conceptions of Kāla from the earliest times. There was a distinct school of thought in ancient India, known as Kālavāda[1], which held that the ultimate cause of all movements of life and thought is Kāla, conceived either as a blind and insentient power, much like the Western conceptions of Fate, Necessity and Destiny, or as the Supreme

---

1. Dr Schrader in his famous work on Indian philosophical speculations prior to and during the days of Buddha Gautama and Mahāvira brought together valuable data on this doctrine. Cf. also the present writer's paper on 'Theism in ancient India' in Volume II of Sarasvati Bhavana Studies. The Mahābhārata, in different contexts, gives different versions of this doctrine. In Śānti Parvan, ch. 206. 11, Kāla is placed between *buddhi* (corresponding to Sāṅkhya 'Mahat' and Bhagavān Viṣṇu and is explained by Nilakaṇṭha as 'Avyakta.' Ch. 320. 108 of the same Parvan, however, has a different conception and is interpreted by the commentator as 'Jiva' : 'कालोऽविद्याख्यः षोडशगुण उक्तः । तदुपाधिर्जीवः कालसंज्ञः ।' Again, in the same Parvan in ch. 224. 46 Kāla is defined and described. The commentator understands from this passage that the support of Kāla is तदुपाधिर्जीवः कालसंज्ञः and that the अभिमानी of Kāla is Sūtrātmā.

Conscious Power identical with the Absolute Reality, or even as a subordinate power immediately responsive to the Supreme Will.

The Naiyāyikas, Vaiśeṣikas and Mīmāṁsakas conceived it as a Static Principle, substantial, eternal and ubiquitous in character and held it responsible for our notions of priority and posteriority—temporal sequence of succession; whereas, according to the exponents of Āgama, it is the Supreme Dynamic Principle lying at the root of the cosmic process, both of creation and of destruction. To the Yogin of Patañjali's school, however, it is only a mental construction based on a sense of succession and has no value in Reality.

The conceptions of Time (काल) and Motion (क्रिया) have such an affinity that in several ancient works we actually find them either identified with each other or otherwise intimately connected together.

1. Thus, in the Trika literature, Kāla, viewed in the Absolute Parama Śiva, represents His Supreme Freedom (स्वातन्त्र्यशक्ति) looked upon as Kriyā Śakti projecting the Universe till now unified with the Absolute and making it appear as external to It[2].

The projection of the universe is, therefore, only the apparent externalisation of the Eternal Consciousness. The so-called creative process (विश्वकलना) is only the outer aspect of the Kriyā Śakti, which inspite of its seeming externality retains always its self-contained (स्वात्मविश्रान्त) nature. The truth is that the Absolute Consciousness first appears as Life or Prāṇa (i. e. Kriyā Śakti), on which as a base is built up

---

2. Kāla as thus conceived is to be sharply distinguished from the so called कालतत्त्व, which is one of the six Kañcukas veiling the Essential Form of the Self as Para Śiva and making Him appear as Puruṣa. The same काल which as a Śakti of Para Śiva constitutes His Essential Nature is a principle of limitation from the view-point of Puruṣa or मायाप्रमाता.

the entire fabric of Time and Space. The Space-order is differentiated through forms and the Time-order through motions and activities.[3]

2. Sureśvara, in his Vārttika (14) on Śaṅkara's Dakṣiṇāmūrti-stotra (II) regards Kāla as a form of Kriyā Śakti of the Lord[4] and as the root cause of all changes in nature.

3. The ancient Sāṅkhyas also held, unlike the current authorities who advocate (स्वभाववाद) that the evolution of Nature (गुणपरिणाम) is due to the influence of Kāla rather than to an inherent tendency within itself. As to whether it is an eternal Principle, co-eternal with Puruṣa and Prakṛti, or a principle of specified origin there are differences of opinion Some are of opinion that what is known as Kāla is really ब्रह्मचैतन्य as reflected on Prakṛti,[5]—Mahat and Puruṣa

3. For a detailed study of मूर्तिवैचित्र्य and क्रियावैचित्र्य the reader may consult Abhinava Gupta's Tantrāloka (Āhnika VI), Tantrasāra (Āh. VI) and Īśvara-pratyabhijñā-vimarśini. The Vaiyākaraṇas too, had a parallel view on this twofold variation (वैचित्र्य). See, also Tripurārahasya, Jñānakhaṇḍa, Chapter 14.

4. The Commentator says—कालोऽपि ईश्वरस्यैव शक्त्याकारभेदः ।
Śaṅkara says :

बीजस्यान्तरिवाङ्कुरो जगदिदं प्राङ् निर्विकल्पं पुन-
र्मयाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् ।
मायावीव विजृम्भयत्यपि महायोगीव यः स्वेच्छया
तस्मै श्रीगुरुमूर्त्तये नम इदं श्रीदक्षिणामूर्त्तये ॥

This shows that the universe exists before creation as void of all limitations and as one with the Absolute and that the Supreme Power, called Māyā, gives rise as it were to manifold complications in Time and Space. The universe as thus infinitely diversified is manifested by an act of the Supreme Will as a magic show.

5 कालः ब्रह्मचैतन्यस्यावस्थाविशेषः प्रकृतिसमावेशकृतः ।
See Rāmatīrtha's reported Sāṅkhya view in his Commentary on the above Vārttika (Mysore Edition, p. 53).

both originating from this reflection, but it is Kāla which has the power of effectuating the guṇas (गुणक्षोभ). Others think—and this is evidently the more accepted view—that Kāla is an eternal Principle just like Puruṣa and Prakṛti. Its character as the source of Nature's dynamism is everywhere recognised.

4. The Bhāgavata saying—कालाद् गुणव्यतिकरः—etc. and the Pāñcarātra Saṁhitā making a more or less similar pronouncement come under the same category.

5. Rāmānuja and other Vaiṣṇava teachers too, entertain almost identical views on the function of Kāla in relation to the action of Prakṛti.[6]

6. The Śākta teachers also have a practically analogous account of Time, though the presentation is in a different form. It is said in the Prapañcasāra (I. 42-4, 64) that the Absolute Reality viewed as Prakṛti is Pure Consciousness and is the origin of all things. It remains always what it is, and yet when the latent Karmans of Jīvas are matured for fructification it becomes, in a part as it were, alienated from itself, externalised and relatively dense. This part is called Prakṛti Tattva. When Kāla acts on the lower Prakṛti, the latter is split up into Three forms, viz., Bindu, Nāda and Bīja.[7] The cleavage of Prakṛti under

---

6. The Vaiṣṇava teachers, however, who advocated what is popularly known as the doctrine of नित्यलीला assigned a special importance to the Transcendent aspect of Time. In the त्रिपादविभूति, the Pure Spiritual Realms, Kāla is an Eternal Being responsive, in the interest of the intensification and variation of the Self-Delight of the Lord, to His Will.

7. For details the reader is referred to Padmapāda's commentary on Prapañcasāra (1.21-64), pp. 11-23. See, also प्रयोगक्रमदीपिका, pp. 398-423.
Bhāskara Rāya, in his Saubhāgya Bhāskara (under verse 132, p. 99), observes that the appearance of (Kārya) Bindu, Nāda

the influence of Time is the occasion for the origin of what for lack of a more appropriate term is called Sound (रव) which is equivalent to what philosophers describe as Avyakta or Śabda Brahman. It is evident from the above that in this view Kāla functions first as the maturer of Karma-seeds (कर्मपाचक) and then as the energiser of Prakṛti.[8]

7. Bhartṛhari's view that the Eternal Kalās of Śabda Brahman under the influence of Kāla Śakti, become the matrices of the diversities in the world-order belongs also to this class.

In the world Time appears as relative. What is known as Eternity is beyond the influence of Time. It is impossible for an ordinary man to arrive at the highest spiritual Realisation where the time-factor is absent without passing through the graded series of intermediate experiences in time. In

---

and Bīja out of the Causal Bindu takes place in succession and that the four stadia of gradual emanations beginning with the Causal Bindu as disturbed by Kāla are synonymous with the four forms of Vāk, viz., Parā, Paśyantī, Madhyamā and Vaikharī.

8. Śaṅkarācārya in his Prapañcasāra (1.39-40) makes it clear that Kāla causes Prakṛti to produce *vikāras*. Padmapāda speaks of two forms of Kāla—higher and lower (पर and अपर). The former is only another name of Supreme Spirit (नारायण) and is ज्ञानात्मक (Com. on I. 28). It is called Unmanī Kalā and is the very soul of the lower Kāla. The latter is discrete and consists, in the language of the Śāstras, of 15 sections (पर्व) from the minimum *lava* upto the maximum *parārdha*. All empirical time, including what is perceived in the Pure Regions, comes under the head. The Supreme Prakṛti is identified with Lower Kāla which represents Time in flow. The Prakṛti knows Herself as She is eternally self-revealed and the Puruṣa knows Her as one with Himself. The Yoga-vāśiṣṭha (1. ch 25) too, speaks of two aspects of time. Cf. Mahākāla and Kriyātmaka Kāla (क्रिया = दैव).

the Tāntric literature there is a regular course[9] of spiritual ascension culminating in the Supreme Experience and Power of the Absolute. What is technically described as Dīkṣā or Initiation is only the setting into activity of a great spiritual current which aims on one hand at the elimination of the bonds of difference (popularly called संसार) and on the other at communion—or rather unification (योजन)—of the Self with the Absolute Reality. The latter function, which is positive in character, helps in the manifestation within the Self of the Supreme Experience. The series of vital, psychic and supra-psychic activities involved in the latter process includes what is known as कालत्याग or transcendence of Time. This is done gradually, and when it is completed Consciousness becomes absolutely pure and gets rid of the elements of succession or even of simultaneity in its contents.[10] In fact, the contents of Consciousness are

9. In the School of Bhartṛhari this course is known as वाग्योग or शब्दयोग.

10. It is held that the minimum perceptible time is a *truṭi*, which consists of two *kṣaṇas* or time-atoms and represents one-fourth of the time taken by the eye to blink, and that the maximum is a Mahākalpa, which is understood not in the usual sense of life-time of Brahmā, as in the Purāṇas, but of the life period of Sadāśiva and is, therefore, named, by way of discriminations, Parama Mahākalpa. The Mahākalpa is the period during which the Cosmic System (ब्रह्माण्ड) or the impure creation continues in life, whereas the Parama Mahākalpa is the more extensive period during which the Pure Order is active. In each case the period of activity is followed by a corresponding period of rest. This is described on the analogy of अहोरात्र or Day and Night. But, beyond Sadāśiva, the Soul as it were of the Pure Order, there is no such division in Time; that is, when the Soul reaches the Plane of Śakti it is above the dualism of Day and Night. But, even here, the Tantras state, Time exists of some sort—not, of course, discrete Time appearing in creation and dissolution or as Day and Night.

merged in it just as waves are merged in the ocean. This Consummation may be reached by *mantra* as well by *yoga*. The so-called Kālaviṣuvat which is the sixth of the seven viṣuvats described in the Nityāṣoḍaśikārṇava, is transcendence of time in the spiritual movement from Samanā upto Unmanā and is a precursor to the final or Divine Unity realised in Tattvaviṣuvat, which is an extremely delicate affair, involving by means of 10817 subtle vibrations the attainment of Absolute Quiet (नादलय) and perfect Self-Realisation.

There are certain phases of the doctrine, however, which the learned writer, by reason of the limits within which he had to work, could not touch except in outline. These include an analysis of *pariṇāma* leading to a systematic treatment of the subject among the Sarvāstivādins, as exemplified in the relevant theories of the great teachers

---

but Pervasive Time called साम्य (Cf. Svacchanda Tantra II. 304 : स कालः साम्यसंज्ञो वै). It is of this Kāla Sāmya that the great Mahākalpa of Sadāśiva is only a minute part. But even this, exalted as it is, has to be gone beyond in the mystic experience relating so समना or महामाया, where Kāla in its widest empirical, though subtle, form may be said to exist. The transcendence of Samanā, which is the 11th Kalā of the Praṇava Mantra, is another name for transcendence of Kāla which functions as the source of mutation. In the Experience associated with Unmanā Śakti there is no such thing as क्रम or succession, but there is apparently यौगपद्य. But beyond It, if we may say so, there being no actual transcendence of Unmanā, even this is absent. Only the Absolute remains, shining upon Itself (though even this description is meaningless in the Ineffable) in Its own self-effulgent glory. This is transcendence of Kāla.

सर्वकालं तु कालस्य व्यापकः परमोऽव्ययः ।
उन्मन्यन्ते परे योज्यो न कालस्तत्र विद्यते ॥

Dharmatrāta, Ghoṣaka, Vasumitra and Buddhadeva and the views of Sarvāstivādi philosophers as against those of Vibhajyavādins.

**Gopinath Kaviraj** (M. A.)
(Mahāmahopādhyaya)
(Late Principal, Govt. Sanskrit College, Benares and Superintendent of Sanskrit Studies, United Provinces)

Benares, 1941

# विषयानुक्रमणी


| | | |
|---|---|---|
| १. | ऋक्संहितामतम् | १ |
| २. | अथर्वसंहितामतम् | ३ |
| ३. | उपनिषन्मतम् | ३ |
| ४. | वेदाङ्गज्यौतिषमतम् | ४ |
| ५. | ज्योतिःशास्त्रमतम् | ६ |
| ६. | महाभाष्यकारमतम् | ७ |
| ७. | वाक्यपदीयमतम् | ८ |
| ८. | भर्तृहरिसिद्धान्तस्य व्याख्यान्तरम् | १३ |
| ९. | प्राचीनमतद्वयं वाक्यपदीयोक्तम् | १४ |
| १०. | साङ्ख्यद्वैविध्यम् | १५ |
| ११. | सेश्वरसाङ्ख्यमतम् | १५ |
| १२. | सेश्वरसाङ्ख्यमतं मानसोल्लासोक्तम् | १६ |
| १३. | निरीश्वरसाङ्ख्यमतम् | १९ |
| १४. | साङ्ख्यमतं वाक्यपदीयोक्तम् | २३ |
| १५. | वैशेषिकमतम् | २४ |
| १६. | नैयायिकमतम् | २५ |
| १७. | दीधितिकारमतम् | २६ |
| १८. | मीमांसकसिद्धान्तत्रैविध्यम् | २७ |
| १९. | भाट्टमीमांसकमतम् | २८ |
| २०. | प्राभाकरमीमांसकमतम् | ३१ |
| २१. | श्रीनिम्बार्कसम्प्रदायमतम् | ३१ |
| २२. | श्रीमाध्वीयमतम् | ३२ |
| २३. | वेदान्तिमतं वाक्यपदीयोक्तम् | ३४ |
| २४. | शाङ्कराद्वैतमतम् | ३५ |
| २५. | श्रीवल्लभसम्प्रदायमतम् | ३९ |
| २६. | गौडीयवैष्णवमतम् | ४१ |
| २७. | शाक्तमतम् | ४२ |
| २८. | शाक्तमतं प्रपञ्चसारविवरणोक्तम् | ५० |
| २९. | शैवमतम् | ५१ |
| ३०. | शैवविशिष्टाद्वैतमतम् | ५२ |

३१. सिद्धान्तागममतम् ५३
३२. वीरशैवमतम् ६०
३३. माहेश्वरमतम् ६१
३४. पाशुपतमतम् आनन्दगिरिप्रोक्तम् ६३
३५. नकुलीशपाशुपतमतम् ६४
३६. प्रात्यभिज्ञमतम् ७०
३७. पाञ्चरात्रमतम् ७३
३८. श्रीसम्प्रदायमतम् ७७
३९. वैष्णवागममतम् ७९
४०. आगममतनिष्कर्षः ८०
४१. द्वैतशाक्तमतं पारानन्दीयम् ८१
४२. प्रपञ्चसारमतम् ८२
४३. मनुसंहितामतम् ८४
४४. महाभारतमतम् ८५
४५. पौराणिकमतम् ८८
४६. विष्णुपुराणमतम् ८९
४७. श्रीभागवतमतम् ९०
४८. योगवासिष्ठमतम् ९२
४९. सूतसंहितामतम् ९३
५०. बौद्धमतम् ९४
५१. जैनमतम् १०२
५२. कामशास्त्रम् १०६
५३. कालकारणिकमतम् १०७
५४. डल्लणाचार्यमतम् १०८
५५. लोकायतमतम् १०८
५६. चरकसंहितामतम् १०९
५७. वर्तमानकालाभाववादिमतम् ११०

॥ श्रीः ॥

# कालसिद्धान्तदर्शिनी

शिवकुमारमानम्य गुरुं विश्वेशतां गतम् ।
क्रियते सुधियां प्रीत्यै कालसिद्धान्तदर्शिनी ॥

प्रस्तूयते नवं वस्तु नेह स्वीयमनीषया ।
कालसिद्धान्तसन्दोहसङ्ग्रहार्थोऽयमुद्यमः ॥

दोषाः समुन्मिषन्त्यत्र मतिमान्द्यनिवेशिताः ।
करुणैकधनाः सन्तो दृशा संशोधयन्तु तान् ॥

कालव्यवहारस्य सर्वजनप्रसिद्धत्वेऽपि कालस्वरूपे विवदन्ते वादिनः । तत्र विविधवादिनां मतानि संक्षिप्य पृथगुपदर्श्यन्ते ।

## ऋक्संहितामतम्

ऋक्संहितायां कालो विश्वाधारोऽपि स्वयमनाधारो नित्यश्चेति निरूपतम् अस्यवामीये सूक्ते[1] द्वितीयस्यामृचि ।

तत्र पूर्वार्धेन सूर्यं प्रतिपाद्य उत्तरेणार्धर्चेन सम्वत्सरात्मा कालः प्रतिपादितः,

'त्रिनाभिचक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधितस्थुः' । इति ।

तत्र यास्कः,

'सम्वत्सरप्रधान उत्तरोऽर्द्धर्चस्त्रिनाभिचक्रम्, ऋतुः सम्वत्सरो ग्रीष्मो

१. द्वितीयाष्टकस्य तृतीयाध्याये ।

वर्षा हेमन्त इति······अजरममरणधर्माणमनर्वमप्रत्यृतमन्यस्मिन् यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते'[१] । इति ।

षण्णामृतूनां द्वौ द्वौ ऋतू समानस्वभावौ इत्यनेनाभिप्रायेण त्रित्वम्[२] ऋतूनामत्र प्रतिपादितम् । 'अजरममरं नहि कदाचिदपि कालो म्रियते ।' 'अप्रत्यृतम् = अप्रतिगतम् अनाश्रितमन्यत्र क्वचित्[३] ।'

द्वितीयाष्टकस्य तृतीयाध्यायेऽस्यवामीय एव सूक्ते,

'पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्द्धे पुरीषिणम् ।'

इति द्वादश्यामृचि 'पितरम्-इत्यनेन कालस्य सर्वोत्पत्तिस्थितिकारणत्वं प्रत्यपादि, अतएव पितरं पालकं सर्वभूतानामुत्पादयितारं वा' इति व्याख्यातं दुर्गाचार्यमहाशयैर्निरुक्तटीकायाम्[४] ।

---

१. निरुक्ते (४।२७)

२. वेदे क्वचिद् ( ऋक्संहितायाम् २।३।१६।१२,१३ ) हेमन्तशिशिरयोरैक्यमाश्रित्य पञ्चऋतवोऽपि समाम्नाताः । अत एव सायणाचार्यैरुक्तम्,

एतद्धेमन्तशिशिरयोरेकत्वाभिप्रायम् इति ।

यास्केन चात्र,

'हेमन्तशिशिरयोः समासेन' इत्युक्त्या ऋतूनां पञ्चत्वं समर्थितम् । क्वचिच्च ( ऋ० सं० २।३।१६।१२ ) षडृतवोऽप्युक्ताः ।

अन्यत्र च ( ऋ० सं० २।३।१६।१५ ), तथा अथर्वसंहितायाम् ( ९।१४।१६ ) ऋतूनां सप्तसङ्ख्यकत्वमपि प्रतिपादितम् ।

समर्थितञ्चैतत् सायणाचार्यैः 'चैत्रादीनां द्वादशानां मासानां द्वयमेलनेन वसन्ताद्याः षडृतवो भवन्ति । अधिकमासेनैक उत्पद्यते सप्तमर्तुः ।' इति ।

३. सायणाचार्यभाष्यम्,

अप्रत्यृतम् अन्यस्मिन्ननाश्रितम् इत्यर्थः-दुर्गाचार्यकृतनिरुक्तटीकायाम् ( ४।२७ ) ।

४. ४।२७ ।

## अथर्वसंहितामतम्

अथर्ववेदसंहितायां कालसूक्तनामके सूक्तद्वये[१] कालस्य महती स्तुतिः समुपलभ्यते। तत्र, 'कालः परमात्मरूपेण प्रतिपादितः' इति वेदभाष्यकाराणां सायणाचार्याणामभिप्रेतम्[२]।

एवञ्च, सायणीयव्याख्यानानुसारेण 'कालः परमेश्वरस्वरूप एव नातिरिक्तः' इत्यथर्ववेदसंहितामतं पर्यवस्यति[३]।

## उपनिषन्मतम्

मुण्डकोपनिषदि तावत् कालस्योत्पत्तिराम्नाता, यथान्येषां पदार्थानामुत्पत्तिकारणं ब्रह्म, तथा कालस्यापीति स्पष्टमभिहितम्[४]। कालस्यास्य नियन्ता परमेश्वर एवेत्युक्तं बृहदारण्यके[५],

---

१. अथर्ववेदसंहितायाम् १९ काण्डे, ६ अनुवाके, ८-९ सूक्तयोः। तत्राष्टमे सूक्ते दश ऋचः, नवमे च पञ्चेति सङ्कलनया द्वयोः सूक्तयोर्मिलित्वा पञ्चदशमन्त्रा भवन्ति।

२. अनेन सूक्तद्वयेन सर्वजगत्कारणभूतः कालरूपः परमात्मा स्तूयते।
—अथर्वसंहितासायणभाष्ये (१९।६।८।१)।

३. 'ब्रह्मणः कालाख्या स्वातन्त्र्यशक्तिः, सा च ब्रह्मणोऽभिन्ना, शक्तिशक्तिमतोरभेदाद्' इति वक्ष्यमाणस्य भर्तृहरिसिद्धान्तस्येदं सूक्तद्वयं मूलमिति प्रतिभाति।

४. तस्मादृचः सामयजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च।
सम्वत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः॥—मुण्डकोपनिषत्(२।१।६)।
अत्र यद्यपि सम्वत्सरस्यैवोत्पत्तिराम्नाता, तथापि सम्वत्सरग्रहणेन कालमात्रमुपलक्षितम्। अतएव व्याख्यातं शङ्करभगवत्पादैः—'सम्वत्सरश्च कालः कर्माङ्गम्' इति।

५. 'अनया श्रुत्या कालस्य परमेश्वराधीनता प्रतिपादिता' इति माधवाचार्यैः सूतसंहिताव्याख्यायां व्यक्तमुक्तम्, 'कालस्य हि शिवायत्तता श्रूयते'। इति।
—शिवमाहात्म्यखण्डे (८।२७)।

'एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्द्धमासा ऋतवः सम्वत्सरा इति विधृतास्तिष्ठन्ति ।'[1]

एवञ्च, उषनिषन्मते कालस्योत्पत्तिमत्त्वेन 'विनाशित्वम्', अतएव—'अनित्यत्वम्' 'अस्वतन्त्रत्वम्' च पर्यवसितम् ।

## वेदाङ्गज्यौतिषमतम्

वेदाङ्गज्यौतिषे याजुषे प्रारम्भे नमस्कारपद्य उक्तम्,

'पञ्चसम्वत्सरमययुगाध्यक्षं प्रजापतिम् ।
दिनर्त्वंयनमासाङ्गंप्रणम्य शिरसा शुचिः ॥' इति ।

पञ्चवर्षात्मकं युगं भवतीति 'वत्सरान्ताच्छन्दसि' (५।१।९१) इति सूत्रे पदमञ्जर्यां हरदत्तोक्त्या प्रतीयते ।[2]

१. ३।८।९ अत्र, 'इति,शब्देनान्येषामपि कालावयवानां ग्रहणं द्रष्टव्यम्, अतएवोक्तं माधवाचार्येण सूतसंहिताशिवमाहात्म्यखण्डव्याख्यायाम्, 'इति शब्दोऽनुक्तसकलकालभागसङ्ग्रहार्थः' इति । ( ८।२७ ) ।

२. 'इद्वत्सरेदावत्सरशब्दौ पञ्चवर्षे युगे द्वयोर्वर्षयोः सञ्ज्ञे ।' इति ।
सोमाकरभाष्ये पञ्चानां वर्षाणां नामान्युक्तानि,
'पञ्चसम्वत्सरमयम् = सम्वत्सरपरिवत्सरेदावत्सरानुवत्सरेद्वत्सरात्मकम्' इति । सोमाकरमते व्यस्त एव पाठः ।
श्रीभागवतेऽप्येषां नामान्यभिहितानि, परन्तु तत्रायं विशेषः, इदावत्सरेत्यत्रेडावत्सर इति, इद्वत्सरेत्यत्र वत्सर इति चोक्तम्,

'सम्वत्सरः परिवत्सर इडावत्सर एव च ।
अनुवत्सरो वत्सरश्च विदुरैवं प्रभाष्यते ॥' ( ३।११।१४ )

श्रीधरीयटीकायामत्राभिहितम्,
'सम्वत्सरादिभेदश्च सौर-बार्हस्पत्य-सावन-चान्द्र-नाक्षत्रमासभेदेन द्रष्टव्यः ।' इति

तथा च, अत्र 'पञ्चसम्वत्सरमयं युगाध्यक्षम्' इति व्यस्तः पाठ उपलभ्यमानोऽप्युपेक्षणीयः।

ज्योतिःशास्त्रपरमाचार्यैः सुधाकरद्विवेदमहाशयैरप्युक्तमेतत्[१]। इदमेव

---

अत्र विजयध्वजीयटीकायामेतत् प्रपञ्चितम्,

( i ) तत्र सौरद्वादशमासाः सङ्क्रमणावसानाः सम्वत्सरः।

(ii) द्वादशराशिषु बृहस्पतेरावृत्त्या यः कालः, तस्य द्वादशांशः परिवत्सरः।

(iii) चन्द्रस्य सप्तविंशतिनक्षत्रभोगेन चान्द्रो मासः, ते द्वादश मासा इडावत्सरः।

(iv) चान्द्रोऽब्दश्चैत्रादिः सोऽयमनुवत्सरः।

(v) अह्नां षष्ट्युत्तरशतत्रयात्मा सावनोऽब्दो वत्सरनामकः। इति।

अत्रैव श्रीधरस्वामिना 'केचित् पुनरेवमाहुः' इति पक्षान्तरमुपन्यस्तम्, स एव पक्षः समीचीनतया बुद्धिपथमधिरोहति। स चायं पक्ष इत्थं प्रतिपादितः,

'यदा शुक्लप्रतिपदि सङ्क्रान्तिर्भवति, स सम्वत्सरः, तत्र, सौरमानेन वर्षे षड्दिनानि वर्धन्ते, चान्द्रमानेन षड् दिनानि ह्रसन्तीति द्वादशदिनव्यवधानादुभयोरग्रपश्चाद्भावो भवति। एवम्, व्यवधानतारतम्येन पञ्चवर्षाणि गच्छन्ति, तन्मध्ये द्वौ मलमासौ भवतः, पुनः षष्ठः सम्वत्सरो भवति।' एतादृशपञ्चवर्षात्मकयुगाभिप्रायेण महाभारते विराट्पर्वणि श्रीभीष्मपितामहेनोक्तम्,

'पञ्चमे पञ्चमे वर्षे द्वौ मासावुपचीयतः।' (५२।३) इति।

शुक्लयजुःसंहितायां २७ अध्याये, ४५ कण्डिकायामग्निस्तुतिरूपायां पञ्चानां सम्वत्सराणां नामानि दृश्यन्ते,

'सम्वत्सरोऽसि परिवत्सरोऽसीदावत्सरोऽसीद्वत्सरोऽसि वत्सरोऽसि'। इति।

अत्र महीधरभाष्यम्, 'पञ्चसम्वत्सरमयं युगाध्यक्षं प्रजापतिम्।' इति ज्योतिःशास्त्रोक्तमिहोच्यते।

हे अग्ने, त्वं सम्वत्सरोऽसि परिवत्सरोऽसि इदावत्सरोऽसि, इद्वत्सरोऽसि वत्सरोऽसि निर्विशेषणः पञ्चसम्वत्सरात्मकः युगरूपोऽसीत्यर्थः। 'युगं भवेत् वत्सरपञ्चकेन' इति ज्योतिःशास्त्रोक्तेः' इति।

अत्र, अनुवत्सरस्थले 'वत्सरः' इति पठितमिति द्रष्टव्यम्।

१. 'पञ्चसम्वत्सरमययुगाध्यक्षम्' इति पाठः साधुरिति सुधाकरीयभाष्यम्।

पद्यम् 'आर्चज्योतिषो'पक्रमेऽपि पठ्यते ।

प्रजानामुत्पत्तिप्रभृतिहेतुत्वेन कालः प्रजापतिरूपेणात्र प्रतिपादितः, दिनर्त्वयनमासास्तस्य कालरूपस्यैव प्रजापतेरङ्गानि । एवञ्च,

कालस्य ग्रहतारादिपरिस्पन्दनरूपत्वं पूर्वोक्तं केषाञ्चिदर्वाचीनज्योतिर्विदां सम्मतमपि न वेदाङ्गज्यौतिषसम्मतम्, किन्तु तस्यैकत्वमतिरिक्तत्वञ्च ।

## ज्योतिःशास्त्रमतम्

ज्योतिर्विदां मते ग्रहनक्षत्रादिक्रियैव कालः ।

प्रतिपादितञ्चैतद् न्यायमञ्जर्यामनुमाननिरूपणे,[1]

'न देवदत्तादिपरिस्पन्दनिबन्धनाः क्रमाक्रमादिप्रत्ययाः, किन्तु ग्रह-नक्षत्रादिपरिस्पन्दनिबन्धनाः, स एव ग्रहतारादिपरिस्पन्दः काल इत्युच्यते ।

तत्कृत एवायं यामाहोरात्रमासादिव्यवहारः ।......।

कालविदश्च ज्योतिर्गणकास्त एवैनं बुद्ध्यन्ते ।।' इति

श्रीमृगेन्द्रवृत्तिदीपिकायामपि,[2] ज्योतिःशास्त्रदृष्ट्या क्रियाविशेषात्मक एवाभ्युपगम्यते,

'आदित्यग्रहतारादिपस्पिन्दमथापरे ।
भिन्नमावृत्तिभेदेन कालं कालविदो विदुः ।।'[3]

इत्युक्तम् ।

---

१. (१।१।५) सूत्रे

२. ( १० प्र० १५ )

३. अयं श्लोकः प्रकीर्णापरनामके वाक्यपदीयतृतीयकाण्डे नवमे कालसमुद्देशे ७६ तमः । स चायं हेलाराजीयव्याख्यायामित्थमवतारितः,
'यतश्च ज्योतिर्गत्या कालनानात्वव्यवहारः, ततः सैव काल इत्यर्वाग्दर्शिनः केचिन्मन्यन्त इत्याहुः' इति ।

# महाभाष्यकारमतम्

निखिलवैयाकरणानां शिरोभूषणायमानो महाभाष्यकारस्तत्रभवान् भगवान् पतञ्जलिः स्वोपज्ञे महाभाष्ये[1] कालस्वरूपमित्थं प्रत्यपादयत्,

'येन मूर्तीनामुपचयाश्चापचयाश्च लक्ष्यन्ते तं कालमाहुः[2] ।'

अत्र, 'येन' इति, 'तं कालम्' इति चैकवचनेन कालस्यैकत्वं सूचितम् ।

कालस्यैकत्वेऽहोरात्रादिभेदव्यवहारः किन्निबन्धनः ? इति शङ्कायां महाभाष्यकारस्यायं समाधिः,

'तस्यैव[3] कयाचित् क्रियया युक्तस्य 'अहः' इति च भवति, 'रात्रिः' इति च ।

---

स्पष्टीकृतश्चास्याशयो हेलाराजेनैव स्वकीयव्याख्यायाम्,

'उदयावधिरस्तमयावसानः सूर्यसञ्चारो दिवसः, अस्तमयादिरुदयपर्यवसानो रात्रिः कालः, स पञ्चदशावृत्तिः पक्षः, त्रिंशत्कृत्वो मासः, चन्द्रमसः सकलनक्षत्रातिक्रमो वा मास इत्येवं वा कल्पना । बृहस्पतेरेकराशिसञ्चरणः सम्वत्सरः । एवमन्येषामपि ग्रहनक्षत्राणां ज्यौतिषशास्त्रप्रसिद्धेन गतिप्रचारभेदेन युगमन्वन्तरकल्पमहाकल्पादिप्रविभागः कालोऽनुसर्तव्यः ।' इति ।

एतस्य पक्षस्य विशेषतो विवेचनं वाक्यपदीयतृतीयकाण्डकालसमुद्देशे ७७-७८ कारिकयोस्तदीयव्याख्यायाञ्च हेलाराजकृतायां कृतम् ।

१. पाणिनिमहर्षिणा कालतत्त्वविषये स्वप्रणीतायामष्टाध्याय्यां न किञ्चिदभिहितम्, न वा वार्तिककारेण कात्यायनेन किमपि निरूपितम् ।

२. 'येन मूर्तीनामिति । तरुतृणलताप्रभृतीनां कदाचिदुपचयः अन्यदा त्वपचयः, स प्रत्ययान्तराविशेषेऽपि यत्कृतः स काल इत्यर्थः ।'—महाभाष्यप्रदीपे कैयटः (२।२।५) । अत्र, कैयटोपाध्यायोक्तौ प्रत्ययान्तरपदेन कारणान्तरं गृह्यत इति महाभाष्यप्रदीपोद्द्योते नागेशमहाशयैरभिहितम् ।

३. यद्येवं तस्यैकत्वात् कथमहरादिविभाग इत्याह,
'तस्यैवेति । परोपाधिक एव सर्वस्य भेदः ।' —महाभाष्यप्रदीपे कैयटः ।

कया क्रियया ?

आदित्यगत्या । तयैवासकृदावृत्तया 'मासः' इति भवति, 'सम्वत्सरः' इति च[1] ।'

अनेन महाभाष्यसन्दर्भेण सूर्यक्रियाया एव कालोपाधित्वं प्रतिपादितम् ।

तथा च एकस्यापि कालस्य सूर्यक्रियारूपोपाधिवशात् क्षण-दिन-मास-सम्वत्सरादिव्यवहारास्पदत्वमिति पर्यवसितम् ।

## वाक्यपदीयमतम्

अयमेव महाभाष्यसिद्धान्तो महाभाष्यतात्पर्यविदग्रेसरेण भगवता भर्तृहरिणा वाक्यपदीयतृतीयकाण्डे स्पष्टतया प्रतिपादितः,

'उत्पत्तौ च स्थितौ चापि विनाशे चापि तद्वताम् ।
निमित्तं कालमेवाहुर्विभक्तेनात्मना स्थितम् ॥
तमस्य लोकयन्त्रस्य सूत्रधारं प्रचक्षते ।
प्रतिबन्धाभ्यनुज्ञाभ्यां तेन विश्वं विभज्यते ॥
यदि न प्रतिबध्नीयात् प्रतिबद्धञ्च नोत्सृजेत् ।
अवस्था व्यतिकीर्येरन् पौर्वापर्यविनाकृताः ॥
तस्यात्मा बहुधा भिन्नो भेदैर्धर्मान्तराश्रयैः ।
न हि भिन्नमभिन्नं वा वस्तु किञ्चन विद्यते ॥
नैको न चाप्यनेकोऽस्ति न शुक्लो नापि चासितः ।
द्रव्यात्मा स तु संसर्गादिवंरूपः प्रकाशते ॥

---

अयमेवार्थो वाक्यपदीये पद्येन सङ्गृहीतः,
'मूर्तीनां तेन भिन्नानामाचयापचयाः पृथक् ।
लक्ष्यन्ते परिणामेन सर्वासां भेदयोगिना ॥' ( ३।९।१३ )

१. ( महाभाष्ये २।२।५ )

संसर्गिणां तु यो भेदो विशेषास्तस्य ते मताः ।
सम्भिन्नस्तैरवस्थानां[1] कालो भेदाय कल्पते ॥'[2]

अस्य सन्दर्भस्यायमभिप्रायः,

वस्तूनामुत्पत्तिस्थितिविलयेषु उपाधिभेदाद् भिन्नरूपेणावस्थित एक एव कालः कारणम् । अस्य विश्वप्रपञ्चस्य प्रतिबन्धाभ्यनुज्ञाभ्यां स एव नियामकः । यस्याभिव्यक्तौ स प्रतिबन्धमाचरति, तद् वस्तु नाभिव्यज्यते, यस्य चाभिव्यक्ति सोऽनुजानाति, तदभिव्यज्यते च । कालकृतयोः प्रतिबन्धाभ्यनुज्ञानयोरभावे वस्तूनामवस्थानाञ्च यौगपद्यप्रसक्त्या पौर्वापर्याभावापत्त्या ज्येष्ठत्वकनिष्ठत्वव्यवहारो न स्यात् ।

सर्वं वस्तु स्वतो भेदाभेदाभ्यां शून्यमपि संसर्गिवस्तु सम्बन्धं निमित्तीकृत्य भेदव्यवहारास्पदं भवति, अत एक एव काल आदित्यक्रियारूपोपाधिसम्बन्धेन् क्षण-दिन-मास-वर्षादिभेदव्यवहारास्पदत्वमुपगच्छन् वस्तूनामवस्थाभेदे कारणतामवलम्बते ।

स च सर्वव्यापकः कालः स्फोटापरनामधेयस्य शब्दात्मकस्य[3] ब्रह्मणः स्वातन्त्र्यशक्तिरूपः ।

जगतो जन्मादिकारणभूताः सन्त्यन्या ब्रह्मणोऽवान्तरशक्तयः कलाऽभिधेयाः, ताश्च कलानामिकाः शक्तय एतस्यां कालशक्तावन्तर्निविष्टाः ।

---

१. अत्र कैयटमते 'अवस्थानाम्' इत्यत्र 'व्यवस्थानाम्' इति पाठः । व्याख्यानञ्चात्र दृश्यते नागेशमहाशयस्य,
'आदित्यक्रियादीनां ये भेदा विशेषास्त एव तस्य कालस्य विशेषा अहरादिविशेषव्यवहारहेतव इत्यर्थः । तैर्भिन्नस्वरूपः कालो व्यवस्थानामहरादिव्यवहाराणां भेदाय विशेषाय कल्पत इत्यर्थः ।' —महाभाष्यप्रदीपोद्द्योते, ( २।२।५ ) ।

२. (९।३-८) ।

३. 'ब्रह्मणः शब्दात्मकत्वं केवलं भगवतो भर्तृहरेरेव सम्मतम्' इति न भ्रमितव्यम्, आचार्यमण्डनमिश्रचरणैरपि स्वप्रणीतब्रह्मसिद्धिग्रन्थे ब्रह्मकाण्डस्थप्रथमपद्यान्तर्गतस्याक्षरपदस्य व्याख्यावसरे ब्रह्मणः शब्दात्मकता प्रतिपादिता,
'अक्षरम्' इतिशब्दात्मतामाह....' इत्यादिग्रन्थेन ।

तासां कलानां जन्मादिकार्यपरम्पराजनने यथायथं प्रतिबन्धाभ्यनुज्ञाभ्यां नियामिका सैव कालशक्तिः ।[१]

तथा च, जगतो जन्मादौ नियामकरूपेण[२] सहकारित्वात् कालो निमित्तकारणम्, कलारूपाः शक्तयस्तूपादानकारणमिति पर्यवसितम् ।

तयैव कालाख्यया स्वातन्त्र्यशक्त्या ब्रह्मणो जगत्कर्तृत्वं निर्वहति, स्वातन्त्र्यस्य कर्तृत्वप्रयोजकत्वात् । यथाह भगवान् पाणिनिः—

'स्वतन्त्रः कर्ता' ।[३] इति ।

एतन्मते, धर्मधर्मिणोरभेदाभ्युपगमेन[४] शक्तिशक्तिमतोश्च धर्मधर्मि-

---

१. 'अव्याहताः कला यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥ —वाक्यपदीये, ( १।२ ) ।
( अत्र-पूर्वार्धे 'अध्याहितकला यस्य कालशक्तिमुपाश्रिता' इति पाठो हेलाराजसम्मतः । —वाक्यपदीय [ ३।९।१४ ] व्याख्या द्रष्टव्या ) ।
'कालाख्येन स्वातन्त्र्येण सर्वाः परतन्त्रा जन्मादिमय्यः शक्तयः, तत्समाविष्टाः कालशक्तिवृत्तिमनुपतन्ति ।.........सर्वेषां हि विकाराणां कारणान्तरेषु सत्स्वपि अपेक्षावशात् प्रतिबन्धजन्मनाभ्यनुज्ञया सहकारिकारणं कालः ।' —पुण्यराजटीका ।

२. 'जलयन्त्रसमावेशसदृशीभिः प्रवृत्तिभिः ।
स कलाः कालयन् सर्वाः कालाख्यां लभते विभुः ।—वाक्यपदीये, ( ३।९।१४ ) ।
अनेनैतत्सूचयति, विश्वात्मैक एव परब्रह्माभिधानः सत्यो भावः, स एव नानाविधकार्यकारितयाऽनन्तशक्तित्वेन व्यवह्रियते, तथा च क्रमिकांश्चक्रभ्रमिवत् परावर्तमानान् भावान् प्रकाशयन् कालयति भूतानीति काल इत्युच्यते । स विभुः स्वतन्त्रः, अत एव 'स्वातन्त्र्यशक्तिः कालः' इति वाक्यपदीये ( १।३ ) सिद्धान्तितम् ।
—हेलाराजटीका ।

३. ( १।४।५४ ) ।

४. 'इदानीं धर्मधर्मिणोरव्यतिरेकं भाविकमाश्रित्य' इति हेलाराजग्रन्थाद् एतदवसीयते । ( ३।९।५४ ) ।

भावसत्त्वेन कालाख्या ब्रह्मशक्तिरन्याश्च तदन्तर्गताः कलाख्याः शक्तयो वस्तुतो ब्रह्मणो न भिद्यन्ते, भिन्नतया तु तासां प्रतीतिमात्रं भवति।[1]

एवञ्च, कालशक्तेर्ब्रह्मापेक्षया वास्तवभेदाभावेन ब्रह्मण्येव पर्यवसानम्।[2]

इदमत्र द्रष्टव्यम्, आचार्यशङ्करभगवत्पादप्रवर्तितादद्वैतमतादत्र मतेऽस्त्ययं विशेषः,

तदीयसिद्धान्तेऽविद्याख्या ब्रह्मशक्तिः कल्पिता, वैयाकरणमते तु कालाख्या ब्रह्मशक्तिरकल्पिताः, भर्तृहरिणा स्वग्रन्थे कालशक्तेस्तदन्तर्गतकला-नामकशक्तीनाञ्च कल्पितत्त्वस्य क्वाप्यनभिधानात्।

ब्रह्मणः शक्तिभ्यो भेदस्त्वेतेषां वैयाकरणानां मते प्रतीतिमात्रविषयत्वात् कल्पित एव। तथा च, एतन्मते मोक्षदशायां तत्त्वज्ञानेन भेदबुद्धौ निर्वर्ति-तायामपि कालाख्या ब्रह्मणः स्वातन्त्र्यशक्तिर्न निवर्तते, तस्याः पारमार्थिक-

---

काश्मीरकशैवाचार्यैरपि शक्तिशक्तिमतोरभेदः स्वीकृतः,
'शक्तिश्च शक्तिमद्रूपाद् व्यतिरेकं न वाञ्छति।
तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव॥'
—अभिनवगुप्तप्रणीतबोधपञ्चदशिका, (३)।

१. 'एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते॥' —वाक्यपदीये, (१।२)
अत्र 'शक्तिभ्यः' इति बहुवचनं कालरूपस्वातन्त्र्यशक्तिविनिविष्टशक्तीनां परस्परमारोपितं भेदमाश्रित्येति द्रष्टव्यम्।

२. अत एव, वाक्यपदीयतृतीयकाण्डे सप्तमे साधनसमुद्देशेऽधिकरणाधिकारे कालाका-शयोर्ब्रह्मरूपता प्रतिपादिता,
'कालात् क्रिया विभज्यन्ते आकाशात् सर्वमूर्तयः।
एतावांश्चैव भेदोऽयमभेदोपनिबन्धनः॥'—६
( अत्र 'एतावानेव' इति पाठान्तरं लघुमञ्जूषायाम् ) भेदरहितं यद् ब्रह्म, तदुप-निबन्धनं वस्तुभूतं यस्य स इत्यर्थः। ईश्वर एव तत्तदाधारत्वविशिष्टस्तत्तत्सञ्ज्ञां लभत इति तात्पर्यम्। —इति व्याख्यातं लघुमञ्जूषायाम्

त्वात्, तत्त्वज्ञानस्य भ्रान्तिनिवर्तकत्वेऽपि पारमार्थिकवस्तुनिवर्तनायां सामर्थ्याभावात् ।

शाङ्कराद्वैतमते त्वविद्यायाः कल्पितत्वाभ्युपगमेन मोक्षदशायां निवृत्तिरिष्टैव ।

न च वैयाकरणमते ब्रह्मणः कालशक्तेश्च द्वयोर्मोक्षदशयां विद्यमानतास्वीकारे द्वैतापत्तिरिति शङ्कनीयम्, तन्मते, शक्तिशक्तिमतोरपृथक्त्वाभ्युपगमेन कालशक्तेर्ब्रह्मव्यतिरेकेणाऽनवस्थानेनाऽद्वैतस्याव्यहतत्वात् ।

काश्मीरकप्रत्यभिज्ञाचार्या ब्रह्मणो विमर्शाख्यां स्वातन्त्र्यशक्तिमभ्युपगच्छन्ति, स्वीकुर्वन्ति च शक्तिशक्तिमतोरभेदम्, मन्यन्ते च विमर्शशक्तेरन्तर्निविष्टा अन्या अवान्तरानन्तशक्तीः । 'आभासवाद'नाम्ना प्रसिद्धः सिद्धान्तोऽयं भर्तृहरिमतमनुकरोतीति विस्पष्टं सूक्ष्मविचारणावताम् ।[1]

नागेशभट्टमहाशयैस्तु लघुमञ्जूषायां योगदर्शनसिद्धान्तमनुसृत्य क्षणरूपकालस्य वस्तुभूतत्वमङ्गीकृतम्, बुद्धिसमाहाररूपत्वञ्च मुहूर्ताहोरात्रादीनामुक्तम् ।

स च क्षणः शब्दतन्मात्रद्वारेण सत्त्वरजस्तमोगुणात्मिकायाः प्रकृतेः परिणाम इत्यपि प्रत्यपादि ।[2]

स चायं सिद्धान्तो महाभाष्याक्षरस्वारस्यमतिक्रामन् भगवतो भर्तृहरेरपि

---

१. काश्मीरकप्रत्यभिज्ञाचार्या भर्तृहरेरर्वाचीना इत्यत्र नास्ति संशयलेशावकाशः, तेषां शिवदृष्टिप्रमुखेषु ग्रन्थेषु भर्तृहरिसिद्धान्तस्य बहुधा समालोचितत्वात् ।

२. प्रकृतेः परिणामस्य विवर्तस्य वाऽतिभङ्गुरस्य विभोः क्षणस्य धारायाः कालत्वात् ।.... यद्वा, शब्दतन्मात्रपरिणामिन एव दिग्वत्कालः ।....तदुक्तम्,
'क्षणतत्क्रमयोः संयमाद् विवेकजं ज्ञानम्' इति, पातञ्जलसूत्रभाष्ये....( ३।५२ ), तत्र क्षणो नाम कालस्य तद्धारारूपस्यापकर्षावधिभूतः पूर्वापरांशशून्यः । क्रमस्तुतत्प्रवाहाविच्छेदरूपः । मुहूर्ताहोरात्रादयो बुद्धिसमाहारा एव ।....क्षणस्तु वस्त्वेव प्रकृतेः शब्दतन्मात्रद्वारा परिणामविशेषः । —लघुमञ्जूषातिङर्थवादे ।

सिद्धान्तेन विरुद्ध्यमानः सहृदयानामुद्वेगमिवोपजनयतीति सुधियो विदाङ्कुर्वन्तु ।

## भर्तृहरिसिद्धान्तस्य व्याख्यान्तरम्

कालो नाम ब्रह्मणः स्वातन्त्र्यशक्तिरिति भर्तृहरेः सिद्धान्तः पुण्यराजहेलाराजयोर्व्याख्यानुसारेण पर्यवसितः[१] ।

परन्तु, केचन चिरन्तना व्याख्याप्रणेतारो भर्तृहरेराशयमन्यथा वर्णयामासुरिति हेलाराजेन प्रतिपादितम्,[२]

कार्याणां प्रतिबन्धोऽभ्यनुज्ञानञ्च कालस्य कृत्यमिति भर्तृहरिसिद्धान्ते सुस्थिते कार्याणां कारणगताः शक्तय एव कालपदवाच्या इति भर्तृहरिमतनिष्कर्षोऽभ्युपगन्तव्यः ।

तथाहि, बीजगता शक्तिर्यदाऽङ्कुरोत्पत्तिमभ्यनुजानाति तदानीमङ्कुरगतां काण्डोपजननानुकूलां शक्तिं स्वकार्यकारणान्निवारयति । एवम्, अङ्कुरगता शक्तिर्यदा काण्डोत्पादं विधत्ते, तदा कारणान्तरगतामागामिकार्यानुकूलां शक्तिं स्वकार्यकारणात् प्रतिबध्नाति । इत्थम्, सर्वत्र पूर्वकार्यानुकूलाः शक्तय उत्तरकार्यानुकूलानां शक्तीनां प्रतिबन्धमाचरन्त्यः स्वस्वकार्याण्युपजनयन्त्यो

---

१—यद्यपि अद्यत्वे वाक्यपदीयग्रन्थस्य ब्रह्मकाण्डे पुण्यराजीया व्याख्योपलभ्यते, हेलाराजीया च तृतीयकाण्डमात्रे, तथापि हेलाराजेन ब्रह्मकाण्डमपि व्याख्यातमासीदिति तत्र तत्र तदीयोक्त्या निश्चीयते ।

२—कालाख्या स्वातन्त्र्यशक्तिर्ब्रह्मण इति ।

भर्तृहरेरभिप्रायव्याख्यातारस्तु 'कारणशक्तिरेव कालः' इति व्याचक्षते । तथाहि, बीजशक्तिरङ्कुरोपजन मभ्यनुजानाति, काण्डप्रसवञ्च ( काण्डप्रसवशक्तिञ्चेति पाठः साधुः प्रतिभाति ) तदानीं प्रतिबध्नाति कार्यकारणात् ।

एवम्, अङ्कुरादिशक्तावपि यथोत्तरमनन्तरकार्यजननाद् व्यवहितकार्यप्रतिबन्धाच्च कालत्वंबोध्यम् । —हेलाराजकृतायां वाक्यपदीयव्याख्यायाम्, ( ३।९।६२ ) ।

दृश्यन्ते। एवम्, भर्तृहरिदर्शितं प्रतिबन्धाभ्यनुज्ञात्मकं कालस्वभावमनुगच्छन्त्यः कारणगताः शक्तय एव भर्तृहरिसिद्धान्ते 'कालतत्त्वम्' इति पर्यवस्यति।

भर्तृहरिसिद्धान्तस्यायमभिप्रायश्चिरन्तनव्याख्याकारप्रकल्पितोऽपि हेलाराजेन युक्त्या निराकृतः[1]।

तत्र, निराकरणयुक्तिश्चेत्थं प्रदर्शिता,

कार्याणां कारणानि प्रतिनियतानि वर्तन्त इति लोकसिद्धमेतत्।

तेषां कारणानां समवधाने कार्याणि समुत्पद्यन्ते, कारणाभावे च कार्याणि न जायन्ते।

एवञ्च, कार्योत्पादानुत्पादयोः कारणतदभावयोरायत्ततयैकस्य कार्यस्य कारणसामग्रीसमवधाने तस्यैवोत्पत्तिर्भवति, कार्यान्तरञ्च तदानीं स्वीयकारणवैकल्येन न जायते। सत्स्वपि कारणान्तरेषु कार्यमात्रे कालस्य नियमेनापेक्षादर्शनात् कालस्य कार्याणां सहकारिकारणत्वमन्वयव्यतिरेकाभ्यां सिद्ध्यति।

तथा च, कारणशक्तिभ्योऽन्यदेव कालतत्त्वमिति फलितम्।

एतस्यैव च कालस्य प्रतिबन्धाभ्यनुज्ञालक्षणं व्यापारद्वयं वाक्यपदीयतृतीयकाण्डगताभ्याम् ७०-७१ कारिकाभ्यां समर्थितम्।

## प्राचीनमतद्वयं वाक्यपदीयोक्तम्

कालविषयेऽन्यदपि प्रचीनं मतद्वयं प्रसङ्गाद् वाक्यपदीये तृतीयकाण्डे प्रदर्शितम्[2]।

---

१—एतच्च, अयुक्तमिव लक्ष्यते। नियतकारणा हि भावाः स्वकारणसन्निधाने भवन्ति, नान्यथेति कारणसामर्थ्यमेवेदम्। तत्र तु नियतकालत्वात् सहकारि (कारणं) कालस्तदन्य एव युक्तः। —हेलाराजीया व्याख्या, (३।९।६२)।

२—'शक्त्यात्मदेवतापक्षैर्भिन्नं कालस्य दर्शनम्।'—वाक्यपदीयतृतीयकाण्डे, (९।६२)।

तत्र कैश्चिदाचार्यैर्जीवात्मन एव कालरूपताऽभ्युपेता, एतन्मतप्रपञ्चनाऽवसरे हेलाराजीये[1] स्पष्टमेव अभिहितम्,

'आत्मा = पुरुषः, जीव एव कालः ।' इति ।

अपरे पुनः कालस्य देवतारूपतां वर्णयाम्बभूवुः ।

तदप्युक्तं हेलाराजीये[2],

'अन्ये तु विग्रहवतीं महाप्रभावां देवतां कालत्वेन प्रतिपन्नाः ।' इति ।

मतद्वयमिदं केषामाचार्याणामासीदिति भगवता भर्तृहरिणा नोल्लिखितम्, न वा हेलाराजेन विषयेऽस्मिन् किञ्चिदुक्तम् । एवञ्च,

साम्प्रतमेतन्मतद्वयमज्ञातमूलमेवेति स्थितम् ।

## साङ्ख्यद्वैविध्यम्

द्विविधं साङ्ख्यम्,—निरीश्वरम्, सेश्वरञ्च,[3] तत्र कापिलं मतं निरीश्वरम्, पातञ्जलं मतं सेश्वरम् । सेश्वरसाङ्ख्यनिरीश्वरसाङ्ख्ययोर्बहुत्र परस्परं सम्प्रतिपत्तिसत्त्वेऽप्यस्ति कुत्रचिद् विमतिरपीति विज्ञानामतिरोहितमेतत् । अस्ति खलु कालविषये तयोर्विमतिः ।

तत्र निरीश्वरसाङ्ख्यानां मतं पूर्वत्र प्रदर्शितम् ।

## सेश्वरसाङ्ख्यमतम्

सेश्वरसाङ्ख्यसिद्धान्तानुसारिणस्तु पातञ्जलाः क्षणात्मकं कालं वस्तुभूतमङ्गीकृत्य तदतिरिक्तानां मुहूर्तयामाहोरात्रप्रभृतिरूपाणां सर्वेषां कालानां बुद्धिमात्रपरिकल्पितमभ्युपगच्छन्ति । श्रीविज्ञानभिक्षुणा योगवार्तिके 'क्षणतत्क्रमयोः संयमाद् विवेकजं ज्ञानम्' इति[4] सूत्रस्य व्यासभाष्यव्याख्यानावसरे समुपवर्णितम्,

---

१—( ३।९।६२ ) ।

२—( ३।९।६२ ) ।

३. शास्त्रदीपिका, (१।१।४) ।

४. पातञ्जलदर्शने, (३।५२) ।

'इदानीं क्षणातिरिक्तः कालो नास्ति मुहूर्तादिरूपो महाकालपर्यन्त इति प्रसङ्गात् स्वशास्त्रसिद्धान्तमवधारयति ।' इति, 'मुहूर्ताहोरात्रादयो बुद्धिकल्पितसमाहार एव' इति च । अत्रत्यं व्यासभाष्यन्त्वेवम्,

'क्षणातत्क्रमयोर्नास्ति वस्तुसमाहार इति बुद्धिसमाहारो मुहूर्ताहोरात्रादयः, स खल्वयं कालो वस्तुशून्यो बुद्धिर्निर्माणः शब्दज्ञानानुपाती लौकिकानां व्युत्पत्तिदर्शनानां वस्तुस्वरूप इवावभासते । क्षणस्तु वस्तुपतित' इत्यादि ।

'वस्तुपतितो वास्तव इत्यर्थः' इति तत्त्ववैशारद्यां वाचस्पतिमिश्राः ।

विज्ञानभिक्षुणाऽत्रैव सूत्रे क्षणस्याऽस्थिरत्वम्, तस्य सत्त्वादीनां गुणानां परिणामविशेषरूपत्वं द्रव्यत्वञ्चेति भाष्याक्षरेभ्यः प्रतिपादितम् । तन्मते,

'कालनित्यत्वश्रुतिस्मृतयश्च प्रवाहरूपकालपराः ।'[1]

'क्षणतत्क्रमयोः संयमात् तयोः साक्षात्करणम्' इति व्यासभाष्यदर्शनात्, क्षणसाक्षात्कारस्य ध्यानधारणासमाधिरूपसंयम[2]जन्यत्वप्रतीत्या क्षणानां योगिप्रत्यक्षगम्यताऽवसीयवे । एवञ्च, पातञ्जलदर्शने वस्तुभूते क्षणरूपे काले स्वीकृतेऽपि तस्य योगजप्रत्यक्षविषयत्वकथनेन स्वमते लौकिकप्रत्यक्षाविषयत्वं सूचितम्, 'देवदत्तो वामेनाक्ष्णा पश्यति' इत्युक्ते 'दक्षिणेन न पश्यति' इतिवत् ।

## सेश्वरसाङ्ख्यमतम् (मानसोल्लासोक्तम्),

मानसोल्लासे पातञ्जलयोगसूत्रप्रतिपादितात् सेश्वरमतादन्यविधं सेश्वरसाङ्ख्यमतं प्रदर्शितम् । पातञ्जले मते कापिलमतसिद्धाः पदार्था अङ्गीकृताः परन्तु कापिलसिद्धान्ते परमेश्वरो नाङ्गीक्रियते, पातञ्जलसिद्धान्ते तु

१. योगवार्तिके तृतीयपादे, ( ५२ सूत्रे ) ।

२. 'देशबन्धश्चित्तस्य धारणा' १ । 'तत्र प्रत्ययैकतानता ध्यानम्' २ । 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' ३ । 'त्रयमेकत्र संयमः' ४ ।

—योगदर्शने तृतीये विभूतिपादे ।

परमेश्वरसत्ताऽङ्गीकृता । स परमेश्वरोऽपि तेषां पञ्चविंशतिसङ्ख्याकेभ्यस्तत्त्वेभ्यो नातिरिक्तं तत्त्वम्, किन्तु पुरुष एवान्तर्भावस्तस्य ।[1]

मानसोल्लासोक्तं पुनः सेश्वरसाङ्ख्यमतमित्थं[2] वर्तते, 'मायाऽविद्यादिशब्दवाच्या मूलप्रकृतिः । तत्र मायायां ब्रह्मचैतन्यप्रतिबिम्बसम्पर्केण

१. तथा च पातञ्जलयोगसूत्रम्,

'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति, (१ पादे २४) ।

सूत्रार्थस्तु,

'अविद्या, अस्मिता, राग, द्वेषः, अभिनिवेशः इति पञ्च क्लेशाः, कर्माऽत्र तज्जन्यमदृष्टम्, विपाकः = कर्मणां फलम्, आशयः = संस्कारः, एभिरसम्बद्धः पुरुषविशेषः = भोक्तृपुरुषेभ्यो विलक्षणो यः पुरुषः स ईश्वर इति ।

२. माया प्रधानमव्यक्तमविद्याऽज्ञानमक्षरम् ।
अव्याकृतञ्च प्रकृतिस्तम इत्यभिधीयते ॥
मायायां ब्रह्मचैतन्यप्रतिबिम्बानुसङ्गतः ।
महान् कालः पुमांसः स्युर्महत्तत्त्वादहङ्कृतिः ॥
तामसात् स्युरहङ्कारात् खानिलाग्न्यम्बुभूमयः ।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धोऽप्यनुक्रमात् ॥
इन्द्रियाणाञ्च विषया भूतानामपि ते गुणाः ।
सात्त्विकात् स्यादहङ्कारादन्तःकरणधीन्द्रियम् ॥
मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम् ।
संशयो निश्चयो गर्वः स्मरणं विषया अमी ॥
श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं ज्ञानेन्द्रियं विदुः ।
राजसात् स्युरहङ्कारात् कर्मेन्द्रियसमीरणाः ॥
कर्मेन्द्रियाणि वाक् पाणिः पादाः पायुरुपस्थकम् ।
वचनादानगमनविसर्गानन्दसञ्ज्ञकाः ॥
विषया .... .... .... .... ....
प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ॥
भूतैस्तु पञ्चभिः प्राणैश्चतुर्दशभिरिन्द्रियैः ।
चतुर्विंशतितत्त्वानि साङ्ख्यशास्त्रविदो विदुः ॥ —मानसोल्लासे, (२।३१-४१) ।

महत्तत्त्वं कालोऽनन्ताश्च पुरुषा जायन्ते । महत्तत्त्वादहङ्कार उत्पद्यते ।

अहङ्कारस्तावत् त्रिविधः,

तामसः, राजसः, सात्त्विकश्चेति ।

तामसादहङ्कारात् पृथिव्यादीनि पञ्चमहाभूतानि शब्दस्पर्शरूपरसगन्धाश्च समुत्पद्यन्ते ।

सात्त्विकादहङ्काराद् अन्तःकरणं श्रोत्रत्वक्चक्षुजिह्वाघ्राणादीनि पञ्च ज्ञानेन्द्रियाणि सञ्जायन्ते । तत्र,

एकमेवान्तः करणं संशयनिश्चयगर्वस्मरणरूपविभिन्नकार्याश्रयतया यथाक्रमं मनो बुद्धिरहङ्कारश्चित्तमिति चतुर्धा व्यपदिश्यते ।

राजसात् तावदहङ्कारात् प्राणः, अपानः, समानः, उदानः, व्यानश्चेति पञ्च प्राणा, वाक्, पाणिः, पादः, पायुः, उपस्थञ्चेति पञ्च कर्मेन्द्रियाणि जायन्ते ।

सेश्वरसाङ्ख्यानामेतेषां मते चतुर्विधमन्तःकरणम्, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, प्राणाद्याः पञ्च वायवो महाभूतानि पञ्चेति सङ्कलनया चतुर्विंशतिस्तत्त्वानां भवन्ति ।

अत्र मते कारणकोटिप्रविष्टानां मायाब्रह्मप्रभृतीनाम् अन्तःकरणादेरुपरिस्थितानां पृथक्पदार्थरूपेण गणना न भवति, तेषां कारणत्वेन सूक्ष्मत्वात् कार्येष्वनुस्यूतत्वाच्च स्थूलदृशामस्मदादीनां कार्येभ्यः पृथक्तयाऽनुभवविषयत्वाऽभावाच्च न स्वातन्त्र्येण गणनार्हताऽङ्गीक्रियते ।

एतस्मिन् सेश्वरसाङ्ख्यमते मायायां ब्रह्मचैतन्यप्रतिबिम्बविशेषः कालः । सत्त्वरजस्तमसां गुणानां समपरिणामात्मनाऽवस्थानं प्रकृतिः, तादृशसाम्यावस्थैव प्रलयावस्था, गुणानां साम्यावस्थातः प्रच्यवनमेव सृष्टिः, सेयं साम्यावस्था प्रच्युतिरेव क्षोभशब्देन व्यपदिश्यते । कालश्चयं गुणानां क्षोभसम्पादकोऽभ्युपगम्यते सेश्वरसाङ्ख्यवादिभिरेभिः ।[1]

अत्र, ये विशेषा वेदान्तपरिभाषायां विषयपरिच्छेदे प्रतिपादितास्ते सर्वे मानसोल्लासादेवाहृताः सन्तीति द्रष्टव्यम् ।

१. 'कालो गुणक्षोभकः' —वृत्तान्तव्याख्या, ( ३२ ) ।

# निरीश्वरसाङ्ख्यमतम्

श्रीशङ्करभगवत्प्रणीतशारीरकभाष्यटीकायां रत्नप्रभायां रचनानुपत्त्यधिकरणे[1] प्रथमसूत्रान्ते साङ्ख्यानां कालपदार्थाऽनङ्गीकारः प्रतिपादितः, 'साङ्ख्यैः कालस्यानङ्गीकाराद्' इत्यनया पङ्क्त्या ।

ईश्वरकृष्णकृतसाङ्ख्यकारिकाव्याख्यायां तत्त्वकौमुद्यां श्रीवाचस्पतिमिश्रैरपि साङ्ख्यमते कालपदार्थस्याभाव उपपादितः, 'कालश्च वैशेषिकाभिमत एको नाऽनागतादिव्यवहारभेदं प्रवर्तयितुमर्हति, तस्मादयं यैरुपाधिभेदैरनागतादिव्यवहारभेदं प्रतिपद्यते सन्तु त एवोपाधयोऽनागतादिव्यवहारहेतवः, कृतमन्तर्गडुना कालेनेति साङ्ख्याचार्याः । तस्माद्, न कालरूपतत्त्वान्तराभ्युपगम इति' ।[2]

इदं साङ्ख्यमतमधुना प्रचलितमपि 'सर्वेषां साङ्ख्याचार्याणां सम्मतम्' इति वक्तुं न शक्यते, अन्यादृशमपि साङ्ख्यमतं कालविषये समुपलभ्यते,

'साङ्ख्यैः प्रकृतेः परिणत्यात्मकोऽसौ (कालः) इत्युच्यते । यदाहुः,

'परिणामः पृथग्भावो व्यवस्थाक्रमतः सदा ।
भूतैष्यद्वर्तमानात्मा कालरूपो विभाव्यते[3] ।।' इति

एवञ्च, 'प्रकृतिपरिणतिः कालः' इति केषाञ्चित् साङ्ख्याचार्याणां मतमासीद् इति प्रतीयते, अत एव, अस्य मतस्य खण्डनावसरे उक्तम्,

'साङ्ख्याभ्युपगतस्तावत् कालो न युक्तः, यतो भोक्तुर्भोगाधिकरणत्वेन स्थितायास्तनोर्वृद्धितरुणाद्यवस्थयाऽनुमीयते परिणतिव्यतिरिक्तः कालः...' इत्यादि ।

पराशरसंहिताभाष्ये श्रीमाधवाचार्यैरभिहितम्—'प्रधानवादे पञ्च-

---

१. अ० २, पा० २ ।

२. साङ्ख्यतत्त्वकौमुदी, ( ३३ कारिका ) ।

३. श्रीमृगेन्द्रवृत्तिदीपिका, ( १० प्रकरणम्, १४ कारिका ) ।

विंशतितत्त्वेभ्यो बहिर्भूतस्य कालतत्त्वस्याभावात् प्रधानमेव कालशब्देन व्यवह्रियताम्[१] इति ।

तथा च प्रधानवाच्यायाः प्रकृतेरेव कालत्त्वं कैश्चित् साङ्ख्यमतानुयायिभिरङ्गीकृतम् ।

साङ्ख्यकारिकाव्याख्यां युक्तिदीपिकायां कालस्य क्रियारूपतैवाङ्गीकृता, तदुक्तं तत्र ।

'न कालो नाम कश्चित् पदार्थोऽस्ति, किं तर्हि ? क्रियासु कालसंज्ञा' इति[२] ।

सम्प्रति प्रचरन्ति साङ्ख्यसूत्राणि 'कपिलेनादिविदुषा निर्मितानि' इति प्रसिद्धेः समूलत्त्वमसम्भवि, तेषां प्राचीनत्वे प्रमाणिकत्वे वा ब्रह्मसूत्र-शाङ्करभाष्य-प्रभृतिपुरातन-प्रामाणिकनिबन्धेषु साङ्ख्यमतप्रपञ्चनावसरे सूत्राणां साक्षात्कपिलमहर्षिप्रणीतत्वेन तेषामेवोपन्यासो दृश्यते, ईश्वरकृष्णकृताया एव साङ्ख्यकारिकायाश्चोद्धारो न दृश्यते, परन्तु वस्तुस्थितिर्विपरीतोपलभ्यमाना साङ्ख्यसूत्राणामेषां प्राचीनत्वे प्रमाणिकत्वे च महान्तं संशयमुपजनयति, सत्यपि एवंविधे संशयकारणे प्रचरतां साङ्ख्यसूत्राणां कालविषये सिद्धान्तोऽत्रावसरे सङ्ग्रहमर्हतीति प्रदर्श्यंते ।

साङ्ख्यसूत्रभाष्यकारा विज्ञानभिक्षुमहोदयाः सूत्राभिप्रायं यथा वर्णयामासुः तदनुसारेण कालस्य नित्यानित्यभेदेन द्वैविध्यं पर्यवस्यति । तत्र नित्यः काल आकाशप्रकृतिभूतः सत्त्वरजतस्तमोगुणात्मिकायाः प्रकृतेर्गुणविशेषात्मको व्यापकश्च । क्षण-दिन-मास-वर्षादिखण्डकालास्तु नातिरिक्ताः, किन्तु कालोपाधित्वेनाऽभिमता ये क्रियाप्रमुखाः पदार्थास्तैर्विशिष्टस्याकाशस्यैव खण्डकालत्वेन क्षणादिव्यवहारनिर्वाहकत्वम्[३] ।

---

१. १ अ०, २० इति ।

२. युक्तिदीपिकायाम्, ५० ।

३. दिक्कालावाकाशादिभ्यः ( साङ्ख्यसूत्रम्, २।१२ ) । नित्यौ यौ दिक्कालौ, तावाकाशप्रकृतिभूतौ प्रकृतेर्गुणाविशेषावेव । अतः, दिक्कालयोर्विभुत्वोपपत्तिः ।.... .... यौ तु खण्डादिक्कालौ, तौ तु तत्तदुपाधिसंयोगादाकाशादुत्पद्येते इत्यर्थः,

परन्तु मतमेतदविचार्य ग्रहणं नार्हति ।

तत्र विचारणायां प्रवर्त्यमानायामियमस्माकं पुरतोऽसङ्गतिरुपतिष्ठमाना दृश्यते, त्रिगुणात्मिकायाः प्रकृतेः सत्त्वरजस्तमोगुणातिरिक्तः कश्चन गुणो नास्तीत्यविवादम् । नित्यकालस्य प्रकृतेर्गुणविशेषरूपत्वे तेषु गुणेष्वेव कश्चन कालाख्यामपि बिभर्तीति स्वीकरणीयम्, तत्र त्रयाणां गुणानां मध्ये कस्यचिदेकतमस्य कालत्वावधारणायां न काचन युक्तिः परिलक्ष्यत इति विनिगमनाविरहात् त्रयाणामेव गुणानां कालत्वे प्रसज्यमाने प्रधानमेव कालः साङ्ख्यसिद्धान्ते इति माधवाचार्यमते पर्यवसानम् ।

साङ्ख्यसूत्रवृत्तिकारा अनिरुद्धभट्टास्तु,

कालस्य द्वैविध्यमनङ्गीकुर्वन्तः केवलं खण्डकालमेव स्वीकुर्वन्ति, तत्तदुपाधिविशिष्टाकाशस्यैव काल व्यवहारनिर्वाहकतया कालस्याकाशेऽन्तभार्वंचेच्छन्ति । वेदान्तिमहादेवास्तु,

स्वोपज्ञे साङ्ख्यसूत्रव्याख्यानेऽनिरुद्धमतमेवानुगच्छन्तः कालस्याकाशेऽन्तर्भावमभिप्रयन्ति[1] ।

श्रीशङ्करभगवत्पादप्रणीतस्य दक्षिणामूर्तिस्तोत्रस्य श्रीमदाचार्यसुरेश्वरनिर्मिते मानसोल्लासनामके वार्तिके रामतीर्थविरचितं वृत्तान्तनामकं व्याख्यानमेकं विद्यते । तत्र प्रसङ्गान्निरीश्वरसाङ्ख्यमतं प्रदर्शितम् ।

मूलप्रकृतिः स्वतन्त्रा सत्त्वरजस्तमोगुणात्मिका विकृतयश्च महदहङ्कारादयः सप्त प्रकृतिविकृत्यात्मकाः[2] ।

---

आदिशब्देनोपाधिग्रहणादिति । यद्यपि, तत्तदुपाधिविशिष्टाकाशमेव खण्डदिक्कालौ, तथापि विशिष्टस्यातिरिक्तताऽभ्युपगमवादेन वैशेषिकनये श्रोत्रस्य कार्यतावत् तत्कार्यत्वमत्रोक्तम् । —साङ्ख्यप्रवचनभाष्ये ।

१. तत्तदुपाधिभेदादाकाशमेव दिक्कालशब्दवाच्यम्, तस्मादाकाशेऽन्तर्भूतौ ।

—अनिरुद्धवृत्तिः, ( २।१२ )

यद्यपि, उपाधिविशिष्टाकाश एव दिक्कालौ —वेदान्तिमहादेवव्याख्या, ( २।१२ ) ।

२. महत्तत्त्वम्, अहङ्कारः, पञ्चतन्मात्राणीति सङ्कलनया सप्त । पञ्चतन्मात्राणि च,

सात्त्विकादहङ्कारादन्तःकरणं सर्वाणि च ज्ञानेन्द्रियाणि[1] जायन्ते, राजसादहङ्कारात् कर्मेन्द्रियाणि,[2] तामसाच्च तस्मात् पञ्चतन्मात्राण्युत्पद्यन्ते। पञ्चभ्यस्तन्मात्रेभ्यः पञ्चमहाभूतानि उपजायन्ते।

प्राणस्तु न तत्त्वान्तरम्, किन्तु साधारणवृत्तिरेव। तथाहि,

सन्ति खल्विन्द्रियाणां प्रत्येकमसाधारणवृत्तयस्तत्तद्विशेषकार्यंकारिण्यः, यास्तासां साधारणवृत्तयस्ताः साङ्ख्यसिद्धान्ते प्राणशब्देन व्यपदिश्यन्ते। अत्रेमं दृष्टान्तमुपन्यस्यन्ति,

एकत्र पञ्जरेऽवस्थितानां पक्षिणां प्रतिशरीरं याः क्रियास्ता असाधारण्यः। तेषु पक्षिषु सञ्चलत्सु पञ्जरे यः स्पन्दो जायते, सा पक्षिणां साधारणी क्रिया। एवम् इन्द्रियेषु स्वस्वव्यापारनिरतेषु शरीराभ्यन्तरे या तेषां साधारणी क्रिया स एव प्राणः। तस्यैकस्यैव प्राणस्य स्थानभेदात् क्रियाभेदात् प्राणापानादिसंज्ञेति। पुरुषसञ्ज्ञका जीवा अनन्ताः, ते च कस्यचित् प्रकृतयो विकृतयो वा न भवन्ति। तथा च, 'मूलप्रकृतिरेका, प्रकृतिविकृत्यात्मकाः सप्त महदादयः एकादशेन्द्रियाणि पञ्चमहाभूतानि चेति षोडशविकारा इति चतुर्विंशतितत्त्वानि, पुरुषः पञ्चविंशकः' इति तेषां (निरीश्वरसाङ्ख्यानां) मतम्।

'भूतम्' 'भविष्यद्' 'वर्तमानम्' इति व्यवह्रियमाणपदार्थव्यतिरेकेण कालाख्यं स्वतन्त्रं सत्त्वं किमपि न विद्यत इति तत्र प्रतिपादितम्[3]। तदुक्तं तत्र,

---

१. शब्दतन्मात्रम्, २. स्पर्शतन्मात्रम्, ३. रूपतन्मात्रम्, ४. रसतन्मात्रम्, ५. गन्धतन्मात्रम् इति। महत्तत्त्वं मूलप्रकृतेर्विकृतिः, अहङ्कारस्य च प्रकृतिः। अहङ्कारो महत्तत्वस्य विकृतिः, तन्मात्राणाञ्च प्रकृतिः। पञ्चतन्मात्राणि तु, अहङ्कारस्य विकृतयः, पञ्चानां महाभूतानां प्रकृतयश्च। तथाहि, शब्दतन्मात्रमाकाशस्य प्रकृतिः, स्पर्शतन्मात्रं वायोः, रूपतन्मात्रं तेजसः, रसतन्मात्रं जलस्य, गन्धतन्मात्रं पृथिव्याः।

१. ज्ञानेन्द्रियाणि पञ्च, १. श्रोत्रम्, २. त्वक्, ३. चक्षुः, ४. रसना, ५. घ्राणेन्द्रियञ्चेति।
२. कर्मेन्द्रियाण्यपि पञ्च, १ वाक्, २ पाणिः, ३ पादः, ४. वायुः, ५ उपस्थ इति।
३. मानसोल्लासवृत्तान्ते, ४०-४१ श्लोकव्याख्यायाम्।

'कालश्च 'भूत' 'भवद्' 'भविष्यद्' इति व्यवह्रियमाणपदार्थव्यतिरेकेण न स्वतन्त्रोऽस्ति'[1] इति । तथा च, 'भूतम्' इति व्यवह्रियामाणं घटादि वस्तु भूतकालः, 'वर्तमानम्' इति व्यवह्रियमाणं वस्तु वर्तमानकालः, एवम् भविष्यद्' इति व्यवह्रियमाणं वस्तु भविष्यत्कालः । इत्थम्, निरीश्वरसाङ्ख्यसिद्धान्ते स्वतन्त्रकालपदार्थाभाव उपपादितः ।

अत्रायं निष्कर्षः,

निरीश्वरसाङ्ख्यानां सिद्धान्ते कालः पदार्थोऽतिरिक्तो नास्तीत्यविवादम्, 'तस्य कस्मिन् पदार्थेऽन्तर्भावः ?' इत्यत्रैव विद्यते विप्रतिपत्तिर्वादिनाम् इति ।

## साङ्ख्यमतम् (वाक्यपदीयोक्तम्)

वाक्यपदीयतृतीयकाण्डे कालसमुद्देशे सत्कार्यवादिनां साङ्ख्यानामतमेकं परकीयमतमित्युपन्यस्तम् ।

तन्मते, त्रयाणां गुणानां सत्त्वरजस्तमसां तिस्रः शक्तयोऽतीतवर्तमानभविष्यत्कालरूपाः सन्ति । तासां शक्तीनामेकदा व्यापाराभावेन यदा यस्याः शक्तेर्व्यापारस्तदा तदनुसारेण वस्तूनामतीत-वर्तमान-भविष्यत्त्वव्यवहाराः सम्भवन्ति । ताश्च शक्तयो गुणेभ्यो व्यक्तिरिक्ताः सर्वेषां वस्तूनां पूर्वोक्तगुणत्रयात्मकत्वेन सर्वत्र व्यवस्थिता वस्तुषु क्रमरूपतया पर्यवस्यन्ति । अतीतभविष्यच्छक्तयोर्वस्तुष्वसम्वेदनरूपं कार्यं वर्तमानशक्तेश्च सम्वेदनमेव व्यापारः । शक्तिविशेषणप्रभावेणऽदर्शनं गतानां वस्तूनां सर्वथा निवृत्त्यभावादस्माभिरसत्त्वेन उपलब्धिविषयीकृतानामपि तत्काले सत्त्वं न निहन्यते ।

तथा च, अवस्थाभेदस्य पारमार्थिकत्वेऽपि सर्वास्ववस्थासु वस्तूनां सत्त्वस्याव्याहततयाऽदर्शनदशायामपि सद्रूपाण्येव तानीति सत्त्वासत्त्वयोर्वास्तव-

---

१. मानसोल्लासवृत्तान्तव्याख्या, ४१ ।

भेदाभावादेकत्वमेव पर्यवस्यति ।[1]

इदमत्रावधेयम्, एतास्तिस्रः शक्तयस्त्रिषु गुणेषु सर्वत्र व्याप्य वर्तन्ते, न तु प्रत्येकमेकैकाः शक्तय इति ।

## वैशेषिकमतम्

वैशेषिकतन्त्रे कालस्य द्रव्यत्वम्, विभुत्वम्, एकत्वम्, नित्यत्वम्, उपाधिभेदेन चैकस्यापि तस्य नानात्वव्यवहारास्पदत्वम्[2] इति सिद्धान्तितम् ।

कालस्तु वैशेषिकराद्धान्ते न प्रत्यक्षः, अत एव तत्साधकमनुमानमुपन्यस्तं[3] पुरातनैः काणादतन्त्रपरिशीलननिपुणैः,

---

१. वाक्यपदीयतृतीयकाण्डे नवमे कालसमुद्देशे ५९–६१ कारिकाः, तासां हेलाराजीयव्याख्यानानि चानुसन्धेयानि ।

२. काललिङ्गानां परापरादिप्रत्ययानामविशेषाद् भेदाप्रतिपादकत्वाद् अञ्जसा मुख्यया वृत्त्या कालस्यैकत्वेऽपि सिद्धे, नानात्वोपचाराद् नानात्वव्यपदेशः' ।—न्यायकन्दली । 'काललिङ्गाविशेषादञ्जसैकत्वेऽपि' इत्यादिप्रशस्तपादभाष्यव्याख्यानमेतत् ।

'ननु, कालस्य भूतभविष्यद्वर्तमानभेदेन बहुत्वात् कुत एकत्वमिति चेद् न, उपाधिभेदेन भेदप्रत्ययात् । कालोपाधयो रविक्रियादिरूपा भिन्ना एव ।'—तर्कामृतम्

३. 'स्थविरादौ परत्वं तपनपरिस्पन्दप्रकर्षबुद्धिजन्यं तदनुविधायित्वात् पटकुविन्दवत् । ते च तपनपरिस्पन्दाः स्थविरशरीरप्रत्यासत्तिमपेक्षन्ते, स्वभावतोऽप्रत्यासन्नत्वे सति तदवच्छेदकत्वात् पटावच्छेदकमहारजनरागवत् । सा च प्रत्यासत्तिर्द्रव्यकृता प्रकारान्तरासम्भवे सति प्रत्यासत्तित्वादेव पटे महारजनरागवत् । तच्च द्रव्यमितरेभ्यो भिद्यते विशिष्टपरत्वाद्यनुमेयत्वात् ।' —किरणावली ।

परत्वजनकं बहुतररविक्रियाविशिष्टशरीरज्ञानमिदं परम्परासम्बन्धघटकसापेक्षम्, साक्षात्सम्बन्धाभावे सति विशिष्टज्ञानत्वात्, लोहितस्फटिक इति प्रत्ययवत् । परम्परासम्बन्धश्च, स्वसमवायिसंयुक्तसंयोगः । तेन सम्बन्धघटकः कालः सिद्ध्यति । —तर्कामृतम् ।

'तस्य गुणाः सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागाः ।'[1]

'सर्वोत्पत्तिनिमित्तं जगदाधारश्च कालः ।'[2]

## नैयायिकमतम्

वैशेषिकसिद्धान्तसम्मता एव पदार्था नैयायिकनामनुमताः । अत एव, न्यायसिद्धान्तमुक्तावल्यां द्वितीयकारिकाव्याख्याने वैशेषिकतन्त्रसम्मतान् सप्त पदार्थान् अनुक्रम्य प्रतिपादितम्,

'एते च पदार्था वैशेषिके प्रसिद्धाः, नैयायिकानामप्यविरुद्धाः, प्रतिपादितञ्चैवमेव भाष्ये'[3] इति ।

तत्रत्यदिनकरीयटीकायामपि निरूपितम्,

'नैयायिकानामपि मते सप्तपदार्था इत्यविरुद्धम्, षोडशपदार्थानां सप्तपदार्थेस्वन्तर्भूतत्वाद्'[4] इति ।

---

'दिक्कालयोरपि परत्वापरत्वानुमेयत्वेन सिद्धावेकत्वसिद्धिः । तथाहि, तरणिपरिस्पन्दलक्षणाहोरात्राद्यल्पबहुत्वाभ्यां विशिष्टे पिण्डे परापरबुद्धिर्जायते, तरणिपरिस्पन्दस्य च सूर्यसमवेतत्त्वेन स्वतः पिण्डसम्बन्धाभावात्, सूर्यस्य च मूर्तत्वेनाश्रयद्वाराऽपि सम्बन्धाभावात् । न च पृथिव्यादीनां तत्सम्बन्धघटकता मूर्तत्वात् । आत्माकाशयोश्च विशेषगुणवत्त्वेन घटादिवत् तदघटकत्वात् । ततस्तरणिपरिस्पन्दपिण्डसम्बन्धघटकतया सिद्धं यद् व्यापकं द्रव्यं स एव कालः ।

पिण्डस्य तरणिपरिस्पन्देन संयुक्तसमवायलक्षणः सम्बन्धः ।'

—Vigianagaram Sanskrit Series p. 17. सप्तपदार्थीमितभाषिणीटीकायाम् ।

१. प्रशस्तपादभाष्यम्, द्रव्यग्रन्थे ।

२. काणादसिद्धान्तचन्द्रिका, १० पृष्ठे ।

३. वात्स्यायनभाष्ये, ( १।१।९ ) ।

४. प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वनिर्णयान्निःश्रेयसाधिगमः' ( १।१।२ ) इति गौतमसूत्रोद्दिष्टानां षोडशानां पदार्थानां काणादतन्त्रसिद्ध्येषु सप्तपदार्थेष्वन्तर्भावात् । स चायमन्तर्भावप्रकारस्तत्रैव दिनकरीयटीकायां निरूपित इति व्यक्तं विदुषाम् ।

एवञ्च, कालविषये वैशेषिकसिद्धान्तेनैव नैयायिकसिद्धान्ता व्याख्याता वेदितव्याः ।

न्यायमञ्जरीग्रन्थे जयन्तभट्टनिर्मिते,

'दृष्टः परापरत्वस्य दिक्कृतस्य विपर्य्ययः ।
युवस्थविरयोः सोऽपि विना कालं न सिद्ध्यति ॥'

इत्यादिना परत्वापरत्वाभ्यां कालकृताभ्यां कालोऽनुमीयत इत्युपपाद्य तस्यैकत्वम्, विभुत्वम्, द्रव्यत्वम्, नित्यत्वञ्च समर्थ्य क्रियारूपोपाधिवशाद् एकस्यापि कालस्य वर्तमानादिभेदव्यपदेश इति निरूपितम् । उपसंहारे च,

'समानतन्त्रे दिक्कालौ वैतत्येन विचिन्तितौ ।
तन्नेह लिख्यते, लोके द्वेष्या हि बहुभाषिणः ॥'[1]

इत्युक्त्या वैशेषिकतन्त्रसिद्धान्त एव कालविषये नैयायिकानामभिमत इति प्रत्यपादि ।

परन्तु सर्वान्ते,

'सिद्धः कालश्चाक्षुषो लैङ्गिको वा
तन्नानात्वं सिद्धमौपाधिकञ्च ।'[2]

इत्यभिधानाद् मीमांसकसिद्धान्तनिपुणानां जरन्नैयायिकजयन्तभट्टानां कालस्य प्रत्यक्षत्वे नातीवविमतिरिति प्रतीयते ।

## दीधितिकारमतम्

नव्यनैयायिकप्रवरा दीधितकारा रघुनाथशिरोमणिचरणास्तु स्वयन्नैयायिका अपि चिरन्तननैयायिकसिद्धान्तमसमञ्जसं मन्यमानाः कालविषयेऽभिनवं सिद्धान्तमुपन्यासन्,

---

१. २।५ ।
२. न्यायमञ्जर्याम्, ( २।५ ) ।

'अतिरिक्तकालवादिभिः कालोपाधित्वेन स्वीकृतैरेव उपाधिभिरवच्छिन्नः परमेश्वरः कालव्यवहारविषयः, न तु परमेश्वरातिरिक्तः कालोऽङ्गीकर्तव्यः, प्रमाणाभावात् ।

अथवा, क्षणा एवातिरिक्ता 'इदानीम्' इत्यादिव्यवहारविषयाः, विभागप्रागभावावच्छिन्नकर्मणः क्षणत्वासम्भवात् ।

एवञ्च, उपाधीनामतिरिक्तानां क्षणिकपदार्थरूपाणां वा क्षणानामवश्याभ्युपेयतया तैरेव सर्वे कालव्यवहारा उपपादनीयाः, किमतिरिक्तेन कालेनेति ?'

एतत् सर्वं रघुनाथशिरोमणिभट्टाचार्यनिर्मिते पदार्थतत्त्वनिरूपणे स्पष्टम् ।[1]

परन्तु, इमं सिद्धान्तमर्वाचीना नैयायिका नाङ्गीचक्रुः । खण्डितञ्चैतन्मतं रामभद्रसार्वभौमविरचितायां पदार्थतत्त्वनिरूपणटीकायाम्,

'वस्तुतस्तु','प्राच्यां दिशि घटः' 'एतस्मिन् काले घटः' इत्यादिप्रतीतयो विलक्षणविशेषणतावत्त्वरूपदिक्त्वकालत्वे उपाधी अवगाहन्ते, इत्यादिना ।

न्यायसिद्धान्तमुक्तावलीदिनकरीयव्याख्यायामपि तृतीयकारिकाव्याख्यानावसरे दीधितकारमतमनादृत्य कालस्यातिरिक्तत्वं समर्थितम् ।

## मीमांसकसिद्धान्तत्रैविध्यम्

कुमारिलभट्टः, मुरारिमिश्रः प्रभाकरश्चेति त्रयो मीमांसकाः । एत एव क्रमेण भट्टमिश्रगुरव उच्यन्ते । तत्र मुरारिमिश्रमतप्रदर्शकः कश्चिदपि पदार्थप्रतिपादकः स्वतन्त्रो ग्रन्थो नाधुनाऽपि दृष्टिविषयतामधिगत इति कालविषये तदीयं मतं विशिष्य प्रतिपादयितुं न शक्यते ।[2]

---

१. काशीमुद्रिते २, ३, ५८, ५९, ६० पृष्ठेषु ।

२. यद्यपि मद्रास्नगरात् प्रकाशिते 'ओरियेण्टल् रिसर्च' ('Oriental Research') नाम्नि पत्रे मुरारिमिश्रकृतं मीमांसासूत्रव्याख्यानम् अर्थवादाधिकरणम् ( १।२।१ )

## भाट्टमीमांसमतम्

भाट्टमते तावत् कालस्य द्रव्यत्वमेवाङ्गीकृतम् । उक्तञ्चैतन्मानमेयोदये प्रमेयपरिच्छेदारम्भे,

परिमाणगुणाधारं द्रव्यं द्रव्यविदो विदुः ॥६॥
पृथिवी सलिलं तेजः पवमानस्तमस्तथा ।
व्योमकालदिगात्मानो मनः शब्द इति क्रमात् ॥७॥
एकादशविधञ्चैतत् कुमारिलमते मतम् । इति

भाट्टचिन्तामणा अपि,

'द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्मनोऽन्धकारशब्दरूपाण्येकादश ।' इत्युक्तं प्रत्यक्षसूत्रे[१] ।

भाट्टसिद्धान्ते कालस्य विभुत्वम्, अत एवात्मवद् नित्यत्वञ्च स्वीक्रियेते ।

तस्य चैकस्याप्युपाधिवशात् क्षण-दिन-मासादि-भेदव्यव्यवहारः । तथा चोक्तं मानमेयोदये,[२]

'कालस्यापि विभुत्वेऽपि औपाधिको भेदव्यवहारोऽस्ति । स यथा,

पञ्चदश निमेषाः काष्ठा, ताभिस्त्रिंशता मुहूर्तः, ते त्रिंशदहोरात्रः, तैस्तावद्भिर्मासः, तैर्द्वादशभिः सम्बत्सरः, तैश्च क्रमेण युगादय इति ।'

'स च कालः षडिन्द्रियग्राह्यः' । इति मानमेयोदयकाराः ।

शास्त्रदीपिकायामत्र विशेषः प्रदर्शितः,[३]

---

आरभ्य किञ्चित् प्रकाशितम्, तथापि तत्र स्वमतसिद्धानां पदार्थानां चर्चा नैव दृश्यते, तद् व्याख्यानं मुरारिमिश्रकृतमन्यकृतं वेति बहवः संशेरते च, व्याख्याने च तत्र लेखकादिदोषेण बहूनि स्थलानि दुर्बोधप्रायाणीति न ततः कथञ्चिदपि मुरारिमिश्रसिद्धान्तसमधिगमसम्भावना ।

१. १।१।४ ।

२. २।२२ ।

३. १।१।५ ।

'कालो न स्वातन्त्र्येण इन्द्रियैर्गृह्यते, अथ च विषयेषु स्वेषु गृह्यमाणेषु तद्विशेषणतया सर्वैरपीन्द्रियैर्गृह्यते।' इति।

अद्वैतसिद्धौ प्रथमपरिच्छेदे परिच्छिन्नत्वहेतूपपत्तिप्रस्तावे श्रीमत्परमहंसपरिव्राजकाचार्यमधुसूदनसरस्वतीपादैरपि कालस्य प्रत्यक्षविषयत्वं मीमांससम्मतमिति प्रत्यपादि,

'कालस्य च रूपादिहीनस्य मीमांसकादिभिः सर्वेन्द्रियग्राह्यत्वाभ्युपगमाद्'[1]। इति।

लघुचन्द्रिकाकारैः श्रीमद्गौडब्रह्मानन्दस्वामिपादैरत्र विशेषोऽभिहितः,

'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते।'

इति मीमांसकोक्तेर्ज्ञानं सर्वं किञ्चित्कालाऽवच्छिन्नमेव स्वविषयं गृह्णाति, तत्र स्वाधिकरणक्षणावच्छिन्नमेव गृह्णातीत्युत्सर्गः। अत एव, धारावाहिकज्ञानस्थलें ज्ञानानां स्वस्वाधिकरणक्षणविशिष्टतया स्वस्वविषयग्राहित्वेन अज्ञातज्ञापकत्वम्' इति मीमांसकाः।

तस्य बाधे तु सम्भवत्क्षणान्तरावच्छिन्नत्वेन, यथा, पाकरक्ते घटे 'श्यामोऽयम्' इतिधीः पाकपूर्वक्षणावच्छिन्नत्वेन श्यामत्वं गृह्णाति। स्मृतिस्तु,

'स्वकारणधीगृहीतकालावच्छिन्नं स्वविषयम्।' इति

श्रीमद्गौडब्रह्मानन्दसरस्वतीमहाशयैरयमेवार्थः स्वप्रणीतायां मीमांसाचन्द्रिकायामौत्पत्तिकसूत्रे प्रतिपादितः,[2]

---

१. मीमांसकमते षडेवेन्द्रियाणि, 'बाह्यं पञ्चविधम्, घ्राणरसनचक्षुस्त्वक्श्रोत्रात्मकम्। आन्तरं त्वेकं मनः' इति शास्त्रदीपिका, (१।४।४)।

'तच्च षड्विधम्, घ्राणरसनचक्षुस्त्वक्श्रोत्रमनोभेदाद्'

—भाट्टचिन्तामणिः, (१।१।४)।

'कानि पुनरिन्द्रियाणि? घ्राणनयनरसनत्वक्श्रवणानि बाह्यानि, आन्तरञ्च मनः।'

—प्रकरणपञ्चिका, (पञ्चमप्रकरणम्)।

२. १।१।५, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयसरस्वतीभवन (Saraswati Bhawan Library) स्थितहस्तलिखितपुस्तकालम्बनेनैतत् प्रदर्शितम्।

क्षणस्यातीन्द्रियत्वेऽपि ज्ञानसामान्यसामग्रीवलाज्ज्ञानमात्रविषयकत्वे बाधकाभावात्[1]। तदुक्तम्,

'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते[2] ।' इति

'क्षणस्य स्वातन्त्र्येण प्रत्यक्षयोग्यता नास्ति' इति सूचनायात्र क्षणस्यातीन्द्रियत्वमुक्तम् । एवञ्च, 'ज्ञानसामान्यसामग्रीबलेन क्षणस्य सर्वेषु ज्ञानेषु विषयविशेषणतया भानम्' इति नवीनभाट्टमतं पर्यवसितम् ।

---

१. 'प्रत्यक्षगम्यतामेव केचित् कालस्य मन्वते ।
विशेषणतया कार्यप्रत्यये प्रतिभासनात् ॥
—न्यायमञ्जर्याम्( ११५ ) ।

अत्र एवकारेणानुमित्यादौ सर्वत्र विषयविशेषतया कालस्य न भानम् इति सूचितम् । इदं मतं केषाञ्चित् प्राचां भाट्टमीमांसकानामिति प्रतिभाति । तैः खलु 'अव्यतिरेकश्चार्थेऽनुलब्धे' ( जैमिनिसूत्रे १।१।४ ) इति सूत्राक्षरस्वारस्येन 'यथार्थम-गृहीतग्राहि ज्ञानं प्रमाणम्' इति प्रमालक्षणमभ्युपगत्य, धारावाहिकप्रत्यक्षस्थलेऽस्य लक्षणस्याव्याप्तिमाशङ्क्य कालस्य प्रत्यक्षत्वमाश्रित्य समाहितम् ।

तदुक्तं भाट्टचिन्तामणौ तर्कपादे चतुर्थसूत्रे,

'एवञ्च, अज्ञातविषयकं बाधकज्ञानरहितं ज्ञानं प्रमा' इति फलितम् । अनेनैवा-शयेनागृहीतग्राहित्वं प्रामाण्यमित्याचक्षते । न चैवम्, गृहीतविषयकधारावाहिकज्ञान-स्याप्रामाण्यप्रसङ्गः ? कालस्य षडिन्द्रियवेद्यत्वेन पूर्वक्षणविशिष्टघटस्य विषयीकरणेन तादृशस्योत्तरज्ञानाविषयतयाऽनधिगतार्थविषयकत्वसम्भवात् । शास्त्रदीपिकादावपि स्फुटमेतत् । धारावाहिकानुमित्यादीनामनभ्युपगमेन स्मृतेः प्रामाण्यस्य चानिष्ट-त्वेन, तत्राव्याप्तेरभावेन न तासु कालस्य विशेषणतया भाननियमः सप्रयोजन इत्येषां ग्रन्थकाराणामाशयः प्रतिभाति ।

अपरे पुनर्भाट्टमतानुयायिनः, ज्ञानमात्रे कालस्य विषयविशेषणतया भानमभ्युप-गच्छन्तीति गौडब्रह्मानन्दोक्त्या प्रतीयते ।

२. अयमदर्धश्लोकः काश्मीरकसदानन्दप्रणीतायामद्वैतब्रह्मसिद्धौ प्रथममुद्गरप्रहारेऽपि दृश्यते । निम्बार्कमतानुसारिश्रीनिवासाचार्यविरचिते वेदान्तसौरभाख्यब्रह्मसूत्रभाष्ये जिज्ञासासूत्रेऽयं स्मृतिरित्युपन्यस्तः । आकरस्त्वस्यान्वेषणीयः ।

## प्राभाकरमीमांसकमतम्

प्राभाकरमते कालस्य द्रव्यत्वमेकत्वमतीन्द्रियत्वं विभुत्वमुपाधिभेदेन च क्षणादिव्यवहारहेतुत्वमित्यादिकं सर्वं वैशेषिकसिद्धान्तवदङ्गीक्रियते ।

तथाहि,

श्रीरामानुजाचार्य[1]विरचिते तन्त्ररहस्ये प्रमेयपरिच्छेदे,

'तत्र चाभ्युपगमसिद्धान्तन्यायेन काणादतन्त्रसिद्ध एव प्रमेयवर्गोऽङ्गीक्रियते, तस्य तत्प्रतिपादनार्थं प्रवृत्तत्वात्, न तु पृथगत्र व्युत्पाद्यते । तत्रानभिमतांशो निराक्रियते, विशेषांशस्तु व्युत्पाद्यते । तत्रानभिमतांशो निराक्रियते, विशेषांस्तु व्युत्पाद्यते ।' इत्युपक्रम्य, 'तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नव' इति द्रव्येषु काल उद्दिष्टः ।

इतः परं कालविषये काऽपि चर्चा क्वापि न कृता ।

तथा च प्राभाकराणां कालविषये सर्वथा वैशेषिकसिद्धान्तसमाश्रयणं सुस्पष्टं प्रतीयत इति कालविषये वैशेषिकसिद्धान्तेनैव प्राभाकरसिद्धान्तो व्याख्यात इति न तत्र पृथङ् निरूपणापेक्षा वर्तते ।

वैशिषिकसिद्धान्तश्चैतद्विषये पूर्वमुक्तः ।

तन्त्ररहस्यं खलु प्राभाकरसिद्धान्तप्रतिपादकः प्रकरणग्रन्थविशेष इति प्रसिद्धं बहुज्ञानाम् ।

## श्रीनिम्बार्कसम्प्रदायमतम्

श्रीनिम्बार्काचार्यमतानुयायिनस्तु वैष्णवाश्चिदचिन्मायाभेदेन तत्त्वत्रितयमभ्युपयन्ति । तत्र माया सत्त्वरजस्तमोगुणमयी । ज्ञातृत्वकर्तृत्वादिधर्मकोऽणुपरिमाणो जीवः प्रतिशरीरं भिन्नश्चित्पदार्थः । अचित्पदार्थस्तु त्रिधा भिद्यते,

---

१. अयं श्रीभाष्यकृतोऽन्य इति बहवः, (Gaekwad's Oriental Series, No. XXIV)

(क) प्राकृतम्,

(ख) अप्राकृतम्,

(ग) कालश्चेति ।

गुणत्रयात्मकमायाश्रयभूतं द्रव्यं प्राकृतम्, तच्च नित्यं परिणामि च । एतदेव महदादिब्रह्माण्डान्तजगद्रूपेण परिणमते । अस्य कार्यमनित्यम् ।

अप्राकृतं वस्तु मायाप्रकृतिकालेभ्योऽत्यन्तभिन्नमचेतनं विष्णुपदपरमपद-ब्रह्मलोकादिशब्दवाच्यम्, अनेकरूपमपि कालातीततया परिणामादिविकार-वर्जितम् ।

एताभ्यां प्राकृताप्राकृताभ्यां भिन्नोऽचेतनद्रव्यविशेषः कालः, स च नित्यो विभुर्भूतभविष्यद्वर्तमानादिव्यवहारासाधारणहेतुः, सृष्ट्यादिसहकारि-कारणञ्च,

'न सोऽपि प्रत्ययो लोके यत्र कालो न भासते ।'

इति स्मृत्या ज्ञानमात्रे कालो विशेषणतया विषयः ।

एतदीयमते चिदचितोर्भिन्नस्वरूपयोरपि ब्रह्मायत्तस्थितिप्रवृत्तिमत्त्वेन ब्रह्माभिन्नत्वस्वीकाराद् चिदचिद्भिन्नाभिन्नं ब्रह्म, स एव श्रीकृष्णपदाभिधेयः, तत्रैव सर्ववेदानां समन्वयः ।[1]

## श्रीमाध्वीयमतम्

श्रीमन्माध्वसिद्धान्तपान्थास्तु,

कालस्य द्रव्यतां प्रतिपेदिरे । श्रीमाध्वमतानुयायिश्रीपद्मनाभरचिते पदार्थसङ्ग्रहे 'दशपदार्थाः, विंशतिर्द्रव्याणि'[2] च स्वीकृतानि । तेषां द्रव्याणा-

१. श्रीनिम्बार्कमतानुसारिश्रीनिवासाचार्यविरचितजिज्ञासासूत्रस्थब्रह्मसूत्रभाष्यं वेदान्त-सौरभाख्यं द्रष्टव्यम्, ( १।१।१ ) ।

२. 'तत्र द्रव्यगुणाकर्मसामान्यविशेषविशिष्टांशिशक्तिसादृश्याभावा दश पदार्थाः ।' 'तत्र द्रव्याणि परमात्मलक्ष्मीजीवाऽव्याकृताकाशप्रकृतिगुणत्रयमहत्तत्त्वाहङ्कारतत्त्वबुद्धिमन इन्द्रियमात्राभूतब्रह्माण्डाविद्यावर्णान्धकारवासनाकालप्रतिबिम्बभेदाद्विंशतिरेव ।'

मन्यतमः कालः, स बद्धानां जीवानामायुर्व्यवस्थापकः, 'आयुर्व्यवस्थापकः कालः' इति पदार्थसङ्ग्रह उक्तेः। 'परमात्मनो मुक्तानाञ्च कालसम्बन्धाभावाद् नायुर्मर्यादा'।

स च कालो नाखण्डः, किन्तु 'क्षणलवाद्यनेकरूपः'। कालश्चायमुत्पत्तिविनाशवान्, अत एवानित्यः, कालोपादानं प्रकृतिरेव[1]।

केचन माध्वीयाः, 'कालोपादानं न प्रकृतिः पूर्वपूर्वकाला एवोत्तरोत्तरकालोपादानम्' इत्यमन्यन्त। तदेतन्मतं माध्वसिद्धान्तसारे खण्डितं युक्तिबलेन। प्रलयेऽपि कालस्थितिरस्ति। अत एव श्रीभागवते,[2]

'सोऽन्तः शरीरेऽर्पितभूतसूक्ष्मः
कालात्मिका शक्तिमुदीरयाणः।

उदीरयाणः = जनयन् इत्यर्थः।

ननु कृत्स्नायाः प्रकृतेः कालोपादानत्वे, प्रकृतेस्तत्रैवोपयुक्तत्वेन महदादिसृष्टिः कथं स्याद्? इति चेद् न, सर्वत्र व्याप्तानां कतिपयप्रकृतिसूक्ष्माणां कालोपादानत्वम्, कतिपयानां महदाद्युपादानत्वम्, कतिपयानाञ्च मूलरूपेणावस्थानमित्यङ्गीकारात्[3]।

न च अल्पानां प्रकृतिसूक्ष्माणां कालोपादानत्वे तत्कार्यस्य कालस्य परिच्छिन्नत्वेन तस्य सर्वव्यापित्वम्, स्वसिद्धान्तसम्मतं[4] भज्येत इति वाच्यम्,

अल्पानामेव महाकार्यात्मना परिणामसम्भवात्, कालस्रष्टुरीश्वरस्याचिन्त्यशक्तिप्रभावेण सर्वनिर्वाहसम्भवेन शङ्काया निरवकाशत्वात्। 'इदानीं प्रातः कालः' इत्याद्यनुभवेन तस्य सर्वाधारत्वम्। कालोऽयम् उत्पत्तिमानपि नित्यः प्रवाहरूपेण; तन्नित्यत्वप्रतिपादकश्रुतिस्मृत्यादयश्चैवमेव सङ्गच्छन्ते।[5]

---

१. माध्वसिद्धान्तसारे कालप्रकरणम्।

२. (३।९।११)

३. पदार्थसङ्ग्रहः।

४. 'प्रत्येकं व्याप्तः' —पदार्थसंग्रहः।

५. अयमेव सिद्धातो योगवार्तिककारविज्ञानाभिक्षूणामपि सम्मत इति प्रतिपादितं सेश्वरसाङ्ख्यमतप्रपञ्चनावसरे।

५

स चायं कालःसर्वकार्योत्पत्तिहेतुः। श्रीमाध्वसिद्धान्ते सर्वे पदार्थाः साक्षिविषयाः, तत्र, अतीन्द्रियाः पदार्था ज्ञाततयाऽज्ञाततया वा साक्षिविषयाः, आत्ममनःकालादयः साक्षादेव साक्षिणो विषयाः, शब्दादयस्तु बहिरिन्द्रिय-द्वारा।[1] एवञ्च, एतन्मते कालः साक्षिवेद्यः।

कालादीनां ग्राहकः साक्षी किंस्वरूपः? इति विचारणायां परमेश्वर-लक्ष्मीसर्वजीवानां स्वरूपभूतः तत्त्वभूतज्ञानेन्द्रियकर्मेन्द्रियसमष्टिरूप इति निर्णयः।

तथाहि, माध्वमते ज्ञानेन्द्रियकर्मेन्द्रियभेदेन द्विविधानीन्द्रियाणि। तानि पुनर्द्विधा भिद्यन्ते,

(क) तत्त्वभूतानि,
(ख) तत्त्वभिन्नानि चेति।

सर्वाणि पुनरिन्द्रियाणि नित्यानि अनित्यानि च। तत्र, तत्त्वभूतानि यानीन्द्रियाणि नित्यानि तान्येव परमेश्वरलक्ष्मीसर्वजीवानां स्वरूपभूतानि साक्षिपदवाच्यानि। साक्ष्यनङ्गीकारे ग्राहकप्रमाणाभावेन कालाकाशादीनां सिद्धिरेव न स्यात्।

अत्रोक्ताः सर्वे विषयाः पदार्थसङ्ग्रहे माध्वसिद्धान्तसारे च निरूपिताः।

## वेदान्तिमतम् (वाक्यपदीयोक्तम्)

कैश्चित् कालतत्त्वपरीक्षणचतुरैश्चिरन्तनैः कालस्य बुद्धिसङ्कलनरूपत्व-मास्थितम्। तथाहि, सङ्कलनात्मकबुद्ध्या सङ्कल्यमाना विभिन्नाः क्रियाश्चि-रक्षिप्रादिव्यवहारस्य विषयतां भजन्ते।

एवम्, क्षण-दिन-मास-वर्षादिव्यवहारा अपि सङ्कलनात्मकबुद्धिग्राह्यासु क्रियास्वेवावतिष्ठन्ते, आदित्यादिगतीनामेव सङ्कलनबुद्धिविषयीभूतानां दिना-

१. पदार्थसङ्ग्रहः, इन्द्रियप्रकरणम्।

विव्यपदेशविषयत्वात् । तथा च, सूक्ष्मदृष्ट्या विचारणायां प्रवर्तितायां बुद्धिसङ्कलनमेव कालतत्त्वमिति व्यवतिष्ठते । तदुक्तम्,

'केचिद् बुद्धयनुसंहारलक्षणं तं (कालं) प्रचक्षते'[1]

व्याख्यातं चैतद्धेलाराजेन,

भिन्नाः क्रियाः सङ्कलनाबुद्ध्याऽनुसंह्रियमाणाः सङ्कल्यमानाश्चिरक्षिप्रादिव्यपदेशस्य निमित्तं भवन्ति, एवम् अहोरात्रादिव्यपदेशस्य··· विषयभूतक्षणगताल्पत्वमहत्त्ववशेन चिरादिभावो बुद्धिसङ्कलनस्य व्यवह्रियत इत्येतावत् कालतत्त्वम्, नास्त्यन्यो बाह्यः कश्चित् कालः' इति ।

श्रीमृगेन्द्रवृत्तिदीपिकायाम्[2] अस्यार्धश्लोकस्य पाठान्तरं दृश्यते,

'केचिद् बुद्धयनुसन्धानपूर्वकत्वं प्रचक्षते' । इति । मतमिदं वेदान्तिनामिति तत्र प्रतिपादितम् । इदञ्च मतं बौद्धप्रायाणामिति हेलाराजेनाऽभिहितम् ।

## शाङ्कराद्वैतमतम्

भगवच्छङ्कराचार्यसम्मतेऽद्वैतसिद्धान्ते त्रिविधा सत्ताऽभ्युपगम्यते,

(क) पारमार्थिकी सत्ता,
(ख) व्यावहारिकी सत्ता,
(ग) प्रतिभासिकी सत्ता चेति ।

तत्र कालत्रयेऽपि यस्य सत्ता न व्यभिचरति तस्यैव पारमार्थिकी सत्ता स्वीक्रियते, सा च ब्रह्मण एव ।

संसारदशायामेव येषामाकाशादीनां सत्ता, न तु ब्रह्मसाक्षात्कारादनन्तरम्, तेषां सत्ता व्यावहारिकी । भ्रमविषयीभूतपदार्थानां शुक्तिरजतरज्जुसर्पादीनां या सत्ता, सा प्रातिभासिकी ।

---

१. वाक्यपदीये, (३।५७) ।

२. १०।१४ ।

तथा च, अद्वैतसिद्धान्ते ब्रह्मातिरिक्तस्य कस्यचित् पारमार्थिकस्य वस्तुनोऽभावेन कालनामा कश्चन पारमार्थिकः पदार्थो नैव वर्तत इति विदुषामतिरोहितमेतत् ।

खण्डनखण्डखाद्ये चतुर्थपरिच्छेदे कारणलक्षणखण्डनप्रसङ्गेन वर्तमानत्वादिप्रत्याख्यानव्याजेन वस्तुतः कालप्रत्याख्यानमेव विहितं श्रीहर्षेण,

'नियमे च प्राक्कालीनतयाऽभिधीयमाने प्रागित्यस्य व्यवच्छेद्यौ वर्तमानभविष्यत्कालौ प्रक्कालश्च व्यवच्छेदको विवेचनीयः, न च तद्विवेचनं शक्यम्' इत्यादिना ।

यद्यपि, पारमार्थिकः कश्चित्पदार्थः कालो नाम नाद्वैतवादिभिरङ्गीकर्त्तुं शक्यते, तथापि कालव्यवहारस्य तैरप्यवश्यमुपपादनीयतया व्यावहारिकः कश्चित् कालोऽद्वैतसिद्धान्ते स्वीकार्यः । अत एव वेदान्तपरिभाषायाम्,

'अनधिगताबाधितार्थविषयज्ञानत्वम्' इति प्रथमप्रमालक्षणस्य धारावाहिकप्रत्यक्षेऽव्याप्तिवारणाय 'नीरूपस्यापि कालस्येन्द्रियवेद्यत्वाभ्युपगमेन धारावाहिकबुद्धेरपि पूर्वपूर्वज्ञानाविषयतत्तत्क्षणविशेषविशिष्टविषयकत्वेन न तत्राव्याप्तिः' इत्युक्तम् ।

अनेन हि ग्रन्थेन स्वसिद्धान्ते कालस्य सत्ता तस्य प्रत्यक्षविषयता चोक्ता ।

अत्रैव शिखामणिटीकायां कालस्य प्रत्यक्षज्ञान एव सर्वत्र विशेषणतया भानम्, न त्वनुमित्यादिपरोक्षज्ञानेऽपीति प्रतिपादितम्, समर्थितञ्चैतत् पेद्दादीक्षितेन प्रकाशिकाख्यायां वेदान्तपरिभाषाव्याख्यायां शाब्दबोधे सर्वत्र कालभाननियमाभावप्रतिपादकेन परोक्षज्ञानेषु कालभाननियमाभावं सूचयता ।

इदमत्रावधेयम्,

ब्रह्मसूत्रे तदीयशाङ्करभाष्ये वाऽऽकाशादिवत् कालविषये विचारणा न दृश्यते, वेदान्तपरिभाषादिषु केषुचिदद्वैतसिद्धान्तप्रतिपादकग्रन्थेषु अद्वैतवेदान्तसम्मत आकाशादिव्यावहारिकप्रमेयवर्गो यद्यपि निरूपितः,

तथापि तत्र कालनिरूपणा स्वातन्त्र्येण न कृता, एवञ्च अद्वैतवेदान्त-निबन्धानां पर्यालोचनया यथाऽऽकाशादीनां व्यावहारिकी सत्ताऽद्वैतमते सिद्ध्यति, न तथा कालस्येति तन्मते कालस्य व्यावहारिकी पृथक् सत्ता दुर्लभा। अत एव, सिद्धान्तबिन्दौ अष्टमश्लोकव्याख्यानावसरे प्रदिपादितम्, 'दिक्कालौ त्वप्रामाणिकत्वान्नोक्तौ' इति।

अद्वैतसिद्धान्ते स्वतन्त्रस्य कालपदार्थस्यानङ्गीकारे कालव्यवहारः कथङ्कारमुपपद्यताम्? इति चिन्तायाम्, तत्रोपपत्तिः प्रदर्शिता श्रीमधुसूदन-सरस्वतीयतिवरैरेव सिद्धान्तविन्दा अष्टमश्लोकव्याख्यायाम्,

'कालस्तु अविद्यैव, तस्या एव सर्वाधारत्वात्।
काश्मीरकसदानन्दप्रणीतायामद्वैतब्रह्मसिद्धौ प्रथममुद्गरप्रहारे,
'कालस्याविद्यात्मकत्वस्वीकाराद्'
इत्युक्तया पूर्वोक्तं मधुसूदनमतमेव समर्थितम्।
'मायैव काल इति वेदान्तिनः' इत्यपि तत्रैव अभिहितम्।

केषाञ्चिदद्वैतवेदान्तिनां सिद्धान्ते अविद्यायाः कालत्वं नाङ्गीकृतम्, किन्तु, ब्रह्माविद्ययोः सम्बन्धस्यैव कालत्वमभ्युपेतम्।

तदुक्तमद्वैतब्रह्मसिद्धौ प्रथममुद्गरप्रहारे,
'मायाचित्सम्बन्ध एव काल इति तदेकदेशिनः।'
तदेकदेशिन इत्यस्य वेदान्त्येकदेशिन इत्यर्थः।

श्रीगौडब्रह्मानन्दस्वामिपादैः पूर्वोक्तसिद्धान्तविन्दुव्याख्यायां न्यायरत्ना-वल्यामधिकं निरूपितम्,

'ननु नेदं युक्तम्, प्रतिविम्बत्वोपहितं जीवं प्रत्यविद्याया आधारत्वेऽपीशं प्रति तथात्वे मानाभावः, शुद्धं प्रति तु सुतराम्, तस्यैव सर्वाधारत्वात्। तदाह, 'तस्या एव' इति। सर्वाधारत्वात् = कालिकसम्बन्धेन स्वेतरसर्वा-धारत्वात्। ईशादिकमपि तत्सम्बन्धेन तद्वृत्ति; शुद्धचितस्तद्वृत्तित्वाभावेऽपि न क्षतिः।

'यः कालकालो गुणी सर्वविद्यः'[1]

इत्यादिश्रुतिषु (शुद्धचित्तः) सर्वदृश्याधारकालाधारत्वात् चक्षुषश्चक्षुः[2] इत्यादिश्रुतिषु दृश्यभासकचक्षुरादिभासकत्ववत् इति ।

'अयञ्च साभासाविद्यारूपः' इति च कालविषये तत्रोक्तम् ।

एवञ्च शुद्धब्रह्मातिरिक्तानां परमेश्वरादिसर्वपदार्थानामाधारः कालः, स चाविद्यारूपोऽपि न शुद्धाविद्यास्वरूपः, किन्तु चैतन्याभासयुक्ताभासरूपः ।

इयञ्च, साभासाविद्या परमेशोपाधिः अविद्यागताभासाविविक्तं चैतन्यञ्च परमेश्वर इत्यपि प्रतिपादितमत्रैव न्यायरत्नावल्याम्,[3]

'वस्तुतस्तु, महाकाले मानाभावः,

इदानीमिदमित्यादिबुद्धेर्जन्यमात्ररूपखण्डकालमात्रविषयकत्वमेव' ।[4]

तथा च,

अद्वैतवादिमते साभासाविद्याया अपि कालत्वं नाङ्गीक्रियते, कालव्यवहारस्य कालोपाधिभूतैर्जन्यपदार्थैरेव निर्वाहाद् इति श्रीब्रह्मानन्दाभिप्रायः ।

इदमत्राभिधेयम्,

'तद्धेदं तर्ह्यव्याकृतमासीद्'[5] इति प्रलये कालसत्ताश्रवणात्, तत्र च जन्योपाधीनामसत्त्वात् कालव्यवहारस्य अन्यथैवोपपादनं कार्यम्, अतएव, श्रीचित्सुखाचार्यविरचितायां प्रत्यक्तत्वप्रदीपिकायां परमेश्वरेणैव कालप्रयुक्तसर्वव्यवहारोपपत्तिमभिधाय स्वतन्त्रस्य कालतत्त्वस्यासत्ता प्रतिपादिता,

'दिवाकरपरिस्पन्दपिण्डसङ्गतिसम्भवात् ।
व्यापिनश्चेतनादेव कथं कालः प्रसिद्ध्यति ॥'[6] इति

१. श्वेताश्व० उ०, (६।१६) ।

२. बृ० उ०, (४।४।१८) ।

३. 'अविद्यागताभासाविविक्तचित्त एवेश्वरत्वस्योक्तत्वात् साभासाविद्यायामीश्वरोपाधित्वम् ।' —न्यायरत्नावली

४. न्यायरत्नावली ।

५. बृ० उ०, (१।४।७) ।

६. (२।६१) । स्पष्टीकृतोऽयमर्थो नयनप्रसादिन्यास्,

कालविषये वेदान्तिमतस्य खण्डनावसरे च श्रीमृगेन्द्रवृत्तिदीपिकाया-मुक्तम्,

'द्विचन्द्रादिवदविद्यारूपत्वेनाऽसत्यत्वाद्' इति ।

एतेनाऽपि, वेदान्तिसिद्धान्ते कालस्यापरमार्थिकत्वमविद्यारूपत्वञ्च व्यज्येते ।

अयञ्च कालो ब्राह्मणः क्रियाशक्तिरिति मानसोल्लासे प्रतिपादितम्[1] ।

ब्रह्मणः शक्तिश्चाद्वैतवेदान्तनयेऽविद्येवेति विदितमेतद् बहुविदाम् ।

## श्रीवल्लभसम्प्रदायमतम्

श्रीवल्लभाचार्यप्रवर्तितसिद्धान्तानुयायिनस्तु[2] "परमार्थत एवात्मा प्रपञ्च-रूपेण स्वेच्छया परिणमति' इति मन्यन्ते । उक्तञ्चाणुभाष्ये जन्मादिसूत्रे[3],

'उत्पत्तिस्थितिनाशानां जगतः कर्तृ वै बृहत् ।
वेदेन बोधितं तद्धि नान्यथा भवितुं क्षमम् ।।

---

'भवेतां वा यथा तथा परत्वापरत्वे, तथापि तदसवायिकारणसंयोगाश्रयः परमेश्वर एव प्रागुपपादितरीत्या घटक इति वृथा कालकल्पना ।'

१. कालरूपक्रियाशक्त्या क्षीराद् परिणमेद् दधि । —मानसोल्लासे, ( २।१४ ) ।

'यः सर्वेषु भूतेषु तिष्ठन्' (बृहदारण्यके, ३।७।१५) इति श्रुतेः सर्वगतस्यान्तर्यामिण ईश्वरस्य या कालाख्या क्रियाशक्तिः, तदधिष्ठिताद् क्षीराद् दध्यात्मना परिणामः, न क्षीरस्वभावात्, तथा सति सदा परिणामप्रसङ्ग इत्यर्थः । एतेन कालोऽपीश्वरस्य शक्त्याकारभेद इति सूचितम् । तथा च श्रूयते,

'पराऽस्य शक्तिर्विविधैव श्रूयते', ( श्वेताश्वतरोपनिषदि ६-८ ) इति ।

—वृत्तान्तव्याख्या ।

२. ब्र० सू०, (१।१।२) ।

३. शास्त्रदीपिका, (१।१।५) ।

अन्येषां मते— 'जन्माद्यस्य यतः' 'शास्त्रयोनित्वाद्' इति सूत्रद्वयम् । श्रीवल्लभाचार्य-मते तु एकमेवेदं सूत्रम्—'जन्माद्यस्य यतः शास्त्रयोनित्वाद्' इत्याकारकम् ।

नहि श्रुतिविरोधोऽस्ति कल्पोऽपि न विरुद्ध्यते ।
सर्वभावसमर्थत्वादचिन्त्यशक्ति वै बृहत् ॥'
'कल्पः = पक्षः' इति श्रीमुरलीधरकृता व्याख्या ।

'सर्वभावसमर्थत्वाद्' इति भाष्यं व्याख्यातं वेदान्तचन्द्रिकायाम्,

'भवनम् = भावः सर्वत्वेन भावः सर्वभावः । स्वस्यैव सर्वभावे समर्थत्वाद् अभिन्ननिमित्तोपादानरूपतयाऽचिन्त्यैश्वर्यंवद् ब्रह्मेति नासङ्गश्रुतिविरोधः ।' इति ।

एतन्मते ब्रह्मणोऽचिन्त्यानन्तशक्तिमत्त्वादेव सर्वोपपत्तौ न क्वापि विरोधलेशः । श्रुतिमप्यत्रार्थे प्रमाणयन्ति ते,

'न तस्य कार्यं करणञ्च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्द्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥''[1]इति

सच्चिदानन्दरूपे ब्रह्मण्यंशत्रयं स्वरूपभूतम्—'सत्यं ज्ञानमनन्तं ब्रह्म',[2] 'विज्ञानमानन्दं ब्रह्म'[3] इति श्रुतिप्रामाण्यात् ।

'यः सर्वज्ञः—' इति श्रुतेः[4] धर्मरूपमपि ज्ञानमस्ति ब्रह्मणि[5] । तत्र स्वरूपात्मकेन सदंशेन जडोद्गमः, पश्चाच्चिदंशाज्जीवानामुद्गमः । जडेषु चिदंशो न दृश्यते, सदंशमात्रकार्यत्वात्, तेषु ब्रह्मणश्चिदंशस्य तिरोधानाद् । जीवे च चिद्रूपत्वात् सत्त्वेन चोपलभ्यमानत्वाद् आनन्दांशमात्रतिरोभावः । अत्र नियामिका भगवदिच्छैवेति ज्ञेयम् । जीवस्याणुरूपता स्वीकृतैतदीयसिद्धान्ते,

---

१. श्वेताश्व० उ०, (६।८) ।
२. तै० उ०, (२।१) ।
३. बृ० उ०, (३।९।२८) ।
४. मु० उ० (१।१।९) ।
५. यथा पाञ्चरात्रसिद्धान्तोपवर्णने ज्ञानरूपस्य ब्रह्मणो ज्ञानं धर्मोऽपीति दर्शितम्, तथाऽत्रापि ज्ञानस्वरूपस्य ब्रह्मणो धर्मोऽपि ज्ञानम् ।

'श्रुतितस्तत्त्वसूत्रैश्च स्मृतिभ्यश्चांश एव सः ।
स्वार्थे प्रामाण्यतस्तेषां तेभ्य एवाणुरेव सः ।'
'तत्त्वसूत्रैः = ब्रह्मसूत्रैः' इत्यर्थः । सः = जीवः ।
एतत्सर्वं विद्वन्मण्डने स्पष्टम् ।

अत्र सिद्धान्ते कालो नामातिरिक्तः कश्चन पदार्थो नास्ति, किन्तु ब्रह्मैव कालः ।

तदुक्तं विद्वन्मण्डने,[1]

'यदि कालस्यापि ब्रह्मत्वमेव मनुषे, तदा ओमिति ब्रूमः । अत एव 'कालोऽस्मि' इति भगवद्वाक्यम्[2] । कालरूपोऽवतीर्णं इत्याद्यपि ।' इति ।

यथा वैशेषिकसिद्धान्ते कालपदार्थमतिरिक्तमङ्गीकृत्य तस्यैकस्यापि उपाधिभेदेन क्षणादिव्यवहारनिर्वाहकत्वमास्थीयते, तथाऽत्र मते ब्रह्मणः क्षदिव्यवहारसम्पादकत्वमुपाधिभेदेनेति सुधीरभिराकलनीयम् ।

## गौडीयवैष्णवमतम्

श्रीकृष्णचैतन्यमहाप्रभूणां गुरवो माध्ववर्त्मानुवर्तिनः सन्न्यासमार्गमाश्रिता आसन्निति प्रसिद्धिः । श्रीचैतन्यमहाप्रभुपादाश्च गौडीयवैष्णवसम्प्रदायप्रवर्तकाः, अत एव, केचन गौडीयवैष्णवसम्प्रदायनाम्ना प्रसिद्धं श्रीचैतन्यसम्प्रदायं माध्वसम्प्रदायेऽन्तर्भूतं मन्यन्ते; परन्तु, माध्वीयसिद्धान्तापेक्षया गौडीयवैष्णवाचार्याणां दार्शनिकसिद्धान्ते सुमहद् वैलक्षण्यं वर्तते ।[3]

---

१. १२ पृ०, (चौखम्बासंस्कृते) ।

२. श्रीमद्भगवद्गीता, (११।३२) ।

३. 'माध्वमतमेव श्रीचैतन्यमहाप्रभूणां सम्मतम्' इति श्रीबलदेवविद्याभूषणानामभिप्रेतम्,
'श्रीमाध्वः प्राह विष्णुं परतममखिलाम्नायवेद्यं च विश्वं
सत्यं भेदञ्च जीवान् हरिचरणजुषस्तारतम्यञ्च तेषाम् ।
मोक्षं विष्ण्वङ्घ्रिलाभं तदमलभजनं तस्य हेतुं प्रमाणं
प्रत्यक्षादित्रयं चेत्युपदिशति हरिः कृष्णचैतन्यचन्द्रः ॥'
—श्रीबलदेवविद्याभूषणप्रणीतप्रमेयवली, ( १।५ ) ।

गौडीयवैष्णवाचार्याणां सिद्धान्ते परमेश्वर-जीव-माया-कालाख्यानि चत्वारि तत्त्वानि नित्यानि। तेषु परमेश्वरः शक्तिमान्, अत एव स्वतन्त्रः, जीव-माया-कालाश्च परमेश्वरशक्तिरूपा अस्वतन्त्राः। तत्र व्यापकज्ञानस्वरूपः परमेश्वरः, अणुज्ञानरूपो जीवः। जीवेश्वरयोर्ज्ञानस्वरूपत्वेऽपि ज्ञानगुणत्वमङ्गीकृतम्। पाञ्चरात्रसिद्धान्ते अहिर्बुध्न्यसंहितामते परमेश्वरस्य ज्ञानस्वरूपत्वेऽपि ज्ञानगुणकत्वं दर्शितम्, तद्वदत्रापि स्वरूपगुणभेदेन ज्ञानद्वैविध्यमिति मन्तव्यम्। परमेश्वरो मायानियन्ता, जीवस्तु मायानियम्यः। सत्त्वरजस्तमोगुणविशिष्टं जडं द्रव्यं माया। सत्त्वादिगुणत्रयहीनं भूतवर्तमानादिव्यवहारकारणं जडं द्रव्यं कालः।

एतन्मतेऽपि नित्यस्यैकस्य कालस्योपाधिवशेन क्षणादिनमासवर्षादिव्यवहारविषयतेति पर्यवस्यति। सर्वमेतद् बलदेवविद्याभूषणकृततत्त्वसन्दर्भटिप्पन्यां स्पष्टम्।[1]

कालविषयकं माध्वमतमेतन्मतविलक्षणमिति स्पष्टमेव।

## शाक्तमतम्

एतन्मते चितिरूपः सत्यस्वरूपः परमशिवाऽपराऽभिधेय आत्मैव

---

अन्ये तु, श्रीचैतन्यमहाप्रभुमतमन्यादृशं वर्णयन्ति,

'आराध्यो भगवान् व्रजेशतनयः, तद्धाम वृन्दावनं
रम्या काचिदुपासदा व्रजवधूवर्गेण या कल्पिता।
शास्त्रं भागवतं प्रमाणममलं, प्रेमा पुमर्थो महान्
श्रीचैतन्यमहाप्रभोर्मतमिदं तत्रादरो नः परः॥'

—श्रीभागवतटीकाकारश्रीश्रीनाथचक्रवर्तिकृतिरिति प्रसिद्धोऽयं श्लोकः।

माध्वीयमतापेक्षया गौडीयवैष्णवमते वैलक्षण्यानि जिज्ञासुभिः स्वयमनुसन्धेयानि।

१. श्रीनित्यस्वरूपब्रह्मचारिप्रकाशिते तत्त्वसन्दर्भे १४२ पृष्ठे द्रष्टव्यम्।

स्वीयस्वातन्त्र्यशक्त्या जगद्रूपेण प्रकाशते[1]। तच्च जगद्, न चैतन्यस्य विवर्त्तः, न वा परिणामः, न च चैतन्येनाऽऽरब्धः, किन्तु दर्पणस्य स्वीयनैर्मल्यशक्त्या तत्र प्रतिविम्बवत् चितेः स्वातन्त्र्यशक्त्या जगदिदं तत्राऽवभासमानं प्रतीयते[2]।

तदिदं परमशिवस्य स्वातन्त्र्यमेव शक्तिः 'क्रिया', 'विमर्शः' इत्यादि-शब्दैरागमेषूच्यते।

परमशिवस्य खलु भगवतः शुद्धचित्स्वरूपस्य जडव्यावृत्तं यत् स्फुरणम्, तदेव स्वातन्त्र्यम्, तच्च मायाशक्तिः, तयैव मायाशक्त्या परिपूर्णचिद्रात्मनः परिच्छेदावभासनमविद्या। सेयमविद्या वक्ष्यभाणषट्त्रिंशत्तत्त्वात्मकं जगदवभासयति। परमशिवस्वातन्त्र्यशक्त्योरभेदः पारमार्थिकः। इयञ्चावस्था तत्त्वातीतत्त्वाद् न जगदन्तर्गता। परिपूर्णचिद्रूपस्यात्मनश्चिद्रूपैव सा शक्तिः। तस्याश्शक्तेरवस्थात्रयम्,

---

१. 'चितिस्वरूपः स्वात्मैव तत्तद्भावात्मना सदा।
भासते स्वाच्छन्द्यशक्त्या नाधिकं विद्यते क्वचित्॥'
—त्रिपुरारहस्यज्ञानखण्डे, (१८।४०,४१)।

'सम्वेदनं सत्यमेकं संवेद्यं तत्र कल्पितम्।
सा चितिः परमा शक्तिः सम्विद्रूपा महेश्वरी॥
स्वात्मभित्तौ जगच्चित्रमव्यक्तादिप्रमोदितम्।
भावयेत्स्वातन्त्र्यमात्राद् निरुपादानहेतुकम्॥'—त्रिपुरारहस्यज्ञानकाण्डे, (१५।४-६)।

'.........एकरूपाऽपि चितिः स्वातन्त्र्यहेतुतः।
स्वान्तर्विभासयेद् बाह्यमादर्शे गगनं यथा॥'

२. नास्ति चेत्यं चितेरन्यद् दर्पणे प्रतिविम्बवत्। —त्रि० र० ज्ञा० का०, (४।९९)।

'दर्पणस्य नैर्मल्यशक्त्या अविकृते तस्मिन् प्रतिविम्बाऽभासनवद् चितेः स्वशक्त्या चेत्यावभासनम्।' —तात्पर्यदीपिका।

इदमत्र बोध्यम्—विवर्तवाद-परिणामवादाऽऽरम्भवादेभ्यो विलक्षणा प्रतिविम्ब-वादः शाक्तानां सम्मत इति तात्पर्यदीपिकायामत्रैव प्रतिपादितम्।

(क) प्रलयादौ भेदाऽवभासराहित्यदशायां चिच्छक्तिरूपता,
(ख) सृष्टेः पूर्वं भेदावभासनौन्मुख्यदशायां मायाशक्तिरूपता,
(ग) भेदावभासदशायां चाऽविद्याऽऽत्मकजडशक्तिरूपता।

इयमेव जडशक्तिः शाङ्कराद्वैतनये 'मूलाविद्या' इति भाष्यते। ततश्च षट्त्रिंशत्सङ्ख्याकानां तत्त्वानां सृष्टिः। तत्त्वं नाम महाप्रलयपर्यन्तस्थायि पृथिव्यादिसामान्यरूपम्, यतो हि पृथिव्यादि महाप्रलयपर्यन्तं तिष्ठति। घटादीनाञ्च ततः प्रागेव विनाशः, अतो न घटादीनां तत्त्वपदव्यपदेश्यता, किन्तु पृथिव्यादीनामेव।

अत्र संक्षेपतस्तत्त्वानि प्रदर्श्यन्ते,

स्वभावतोऽपरिच्छिन्नाया अपि निर्विकल्पकचितेः पूर्वोक्तरूपयाऽविद्यया परिच्छिन्नतायाऽवभासनं शिवतत्त्वम्।

तस्या एव चितेः 'अहम्' इत्येवंरूपेण यद् भासनं तदेव शक्तितत्त्वम्। यद्यपि शिवशक्तयोर्न भेदः तथाऽपि परिच्छन्ननिर्विकल्पचित्तित्वेन शिवतत्त्वता, अहंभासत्वेन शक्तितत्त्वतेति मन्तव्यम्।

एवम्, परिच्छिन्ना चितिर्यदा बहीरूपम् (जगद्) 'अहमिदम्' इति स्वाभिन्नतयाऽवभासयति, तदा 'सदाशिवतत्त्वम्' इत्युच्यते।

सैव चितिः बहीरूपं जाड्यप्राधान्येन यदा 'इदमहम्' इत्यवभासयति, तदा 'ईश्वरतत्त्वम्' इति व्यपदिश्यते।

पूर्वोक्तम् 'अहमिदम्', 'इदमहम्' इत्याभासनद्वयानुगतसामान्यरूपं 'शुद्धविद्यातत्त्वम्'।

चितिप्राधान्यमनुभूय यदा जडशक्तिः स्वप्राधान्यमवसादयति, तदा 'माया तत्त्वम्' इत्युच्यते। सेयं माया विभेदबुद्धिरूपा।

मायातः 'कला', 'विद्या', 'रागः', 'कालः', 'नियतिः' इति पञ्च तत्त्वान्युत्पद्यन्ते। सन्ति चितिस्वरूपे परमशिवे 'सर्वकर्तृता,' 'सर्वज्ञता' 'नित्यतृप्तता,' 'नित्यता', 'स्वतन्त्रता' चेति पञ्च शक्तयः। ता इमा मायावशेन सङ्कुचिताः कलाऽविद्या-राग-काल-नियतिरूपतां यथाक्रमं भजन्ते।

तत्र,

(क) किञ्चित्कर्तृताशक्तिः कला,

(ख) किञ्चिज्ज्ञताशक्तिः अविद्या,

(ग) शतवर्षादिरूपाऽऽयुषा परिच्छेदः कालः,

(घ) किञ्चित्करणे साधनाऽपेक्षारूपपरतन्त्रत्वं नियतिः,

(ङ) एतैः कलादिभिः पञ्चभिर्युक्ता चितिः पुरुषतत्त्वम्[1]।

एतत्कलादितत्त्वपञ्चकं चितेः स्वाभाविकशिवरूपताऽऽच्छादनेन जीवभावमापादयत् 'पञ्च कञ्चुकानि' इति व्यपदिश्यते। यद्यप्येतत् किञ्चित्कर्तृतादि प्रतिपुरुषं भिन्नम्, तथापि तत्सामान्यं कलादितत्त्वम्।

चिदात्मनः प्रकाशांशमाश्रित्य स्थितो जीवानामदृष्टसमूहः प्रकृतिः, सा च सत्त्वरजस्तमोगुणमयी। इयं सुषुप्त्यवस्थायां प्रकृतिशब्दवाच्याऽपि जाग्रत्स्वप्नावस्थयोश्चित्तशब्दव्यपदेश्या भवति।

इयमेव प्रकृतिरन्तःकरणरूपा अभिमानक्रियावत्त्वाद् 'बुद्धिः', सङ्कल्पक्रियावत्त्वाच्च 'मनः'।

ततः सात्त्विकादहङ्कारात् पञ्चज्ञानेन्द्रियाणि, राजसादहङ्कारात् पञ्च कर्मेन्द्रियाणि, तामसाच्चाहङ्काराद् शब्दस्पर्शरूपरसगन्धरूपाणि पञ्च भूतसूक्ष्माणि, पञ्चभ्यो भूतसूक्ष्मेभ्यश्च पृथिव्यादीनि पञ्चमहाभूतानि।

एषा त्रिपुरारहस्यसम्मता षट्त्रिंशत्तत्वप्रक्रिया। तत्र शिवादितत्त्वपञ्चके चितेः प्राधान्यात् तानि शुद्धान्युच्यते, मायादिपुरुषान्ततत्त्वसप्तके

---

१. भेदप्रचुरसम्वीता चितिः सङ्कुचितात्मिका।
पञ्चकञ्चुकसम्व्याप्ता पुरुषत्वं प्रपद्यते॥
कलाविद्यारागकालनियति पञ्चकञ्चुकम्।
कला किञ्चित्कर्तृता स्याद्, विद्या किञ्चिज्ज्ञता भवेत्॥
रागस्तृष्णा, परिच्छित्तिरायुषा काल उच्यते।
नियतिः परतन्त्रत्वमेतैर्युक्तस्तु पूरुषः॥'
—त्रि० र० ज्ञा० का०, (१४।६७-६९)।

चिदचिदुभयप्राधान्याद् मिश्रत्वम्, प्रकृत्यादिपृथिव्यन्तेषु चतुर्विंशतिसङ्ख्याकतत्त्वेषु अचित्प्राधान्याद् अशुद्धित्वम् ।

भेदावभासिसविकल्पज्ञानानाम् अज्ञानत्वम्, तदज्ञानमेव सुखदुःखप्रवाहरूपस्य संसारस्य कारणम् । समाधिपरिपाकभवेन अपरोक्षज्ञानेन अज्ञाननिवृत्त्या संसारनिवृत्तौ मोक्षः सम्पद्यते[१] । संक्षेपतस्तु द्वैतदृष्टिर्जीवानां बन्धः, अद्वैतदृष्टिर्मोक्षः ।[२]

अत्र सिद्धान्ते 'सोऽहम्' इति प्रत्यभिज्ञानात्मकं सविकल्पकज्ञानमेव अज्ञाननिवर्तकम्[३] ।

अत्रेदं तत्त्वम्,

वैराग्यादिसाधनवतः पुरुषस्य, श्रवणेन परोक्षात्मतत्त्वज्ञाने सति पश्चान्मननेन संशयनिवृत्तौ जातायां, ततो निदिध्यासनाद् देहादावहंबुद्धिरूपाया वासनाया निवृत्तौ, शुद्धजीवस्वरूपसाक्षात्कारः, तदनन्तरं शास्त्रेण समधिगतं परमात्मना सह जीवात्मनो यदखण्डैकत्वम्, तदवगाहि 'सोऽहम्' इति प्रत्यभिज्ञानमभ्युपगम्यते, यत् संसारमूलभूताज्ञाननिवर्तकत्वाद् 'मोक्ष'साधनमभ्युपगम्यते[४] ।

एतन्मतेऽपि परमात्मनो जीवभावसम्पादकेषु पञ्चसु कञ्चुकेषु कालस्य गणना कृता । परमशिवतदीयस्वातन्त्र्यशक्तिभ्यामतिरिक्तस्य निखिलवस्तुजातस्यैतन्मते प्रतिबिम्बतुल्यतयाऽतथ्यभूतत्वेन कालस्यापि पारमार्थिकी सत्ता दुर्लभा । व्यवहारदशायां तु जीवोपकरणभूतः कालश्चायं मायाकार्यत्वेनाभ्युपगतः । देशवत् कालस्यापि भावनावशेनैवाल्पत्वमहत्त्वप्रतिभासः[५],

---

१. अपरोक्षं हि विज्ञानं समाधिपरिपाकजम् ।
सप्रपञ्चाज्ञाननाशक्षमं शुभफलाऽवहम् ॥' —त्रि० र० ज्ञा० का०, (१७।३७-३८) ।

२. त्रिपुरारहस्यज्ञानकाण्डतात्पर्यदीपिका, (१६।७२) ।

३. 'तज्ज्ञानं सविकल्पं स्यादज्ञानस्य निवर्तकम् ।' —त्रि० र० ज्ञा० का०, (१७।२६) ।

४. त्रिपुरारहस्य ज्ञानकाण्ड तात्पर्यदीपिका, ( १७।२६ ) ।

५. 'देशः कालोऽथवा किञ्चिद् यथा येन विभावितम् ।
तथा तत् तत्र भासेत दीर्घसूक्ष्मत्वभेदतः ॥'—त्रि०र०ज्ञा० का०, (१४।८३) ।

अत एव,

'भावनाभेदेनैव एकस्मिन्नेव काले चिरशीघ्रत्वभासनम्'[1]।

एतत्तुल्यन्यायेन एकस्मिन्नेव देशे भावनाभेदेन दूरत्वसामीप्यादिप्रतिभासः। परमार्थस्तु देशः कालो वा कश्चिन्नास्तीति, सर्वस्यैव प्रपञ्चस्य भावनाबलेन प्रतिभासनात्।

एतदीयसिद्धान्ते शक्तिशक्तिमतोरभेद एवाभिमतः। तथा च परमशिवतदीयस्वातन्त्र्यशक्त्योरैक्याद् अद्वैतमेव सम्मतमेतेषाम्।

अत्रेदमवधेयम्,

यद्यपि त्रिपुरारहस्ये प्रतिविम्बवाद एव समर्थितः, तथापि शाक्तानां सम्प्रदायविशेषे परिणामवादोऽपि स्वीकृतो वर्तते।

तथाहि,

शाक्तदार्शनिकप्रवरेण त्रिपुरासम्प्रदायानुगामिना परमपण्डितेन भास्कररायेण षट्त्रिंशत्तत्त्वानि समर्थयमानेन परिणामवाद एव श्रद्धा प्रकटिता। तन्मते सामरस्यसम्बन्धेन शक्तिविशिष्टः शिवः परब्रह्म[2], तच्च तत्त्वातीतं वस्तु। तादृशस्य परब्रह्मणः परिणामो विश्वप्रपञ्चः[3]।

---

१. त्रिपुरारहस्यज्ञानकाण्डतात्पर्यदीपिका, (१४।८५)।

२. सामरस्यसम्बन्धेन शक्तिविशिष्टः शिव एव हि परं ब्रह्म।

—भास्कररायकृतललितासहस्रनामभाष्यम्, (२०१)।

३. 'नैसर्गिकी स्फुरत्ता विमर्शरूपाऽस्य वर्ततेऽस्य शक्तिः।
तद्योगादेव शिवो जगदुत्पादयति पाति संहरति॥
साऽवश्यं विज्ञेया यत्परिणामादभूदेषा।
अर्थमयी शब्दमयी चक्रमयी देहमय्यपि सृष्टिः॥'

—भास्कररायकृतवरिवस्यारहस्यम्, (१।४-५)।

तच्च (परं ब्रह्म) प्रकाशैकस्वरूपम्,........प्रकाशस्यापि स्फुरणमवश्यं वाच्यम्,.... तच्च स्फुरणं शक्तिरित्युच्यते।....प्रकाशस्फुरणयोश्च मिलितयोरेव जगत्कारणत्वम्, ....तेन शुद्धस्य शिवस्य शुद्धायाः शक्तेर्वा जगत्कारणत्वं तत्र तत्रोच्यमानं शिवशक्तिरूपस्योभयात्मन एव बोध्यम्। —वरिवस्यारहस्यप्रकाशः, (२।६७।६०)।

स च प्रपञ्चो भास्कररायमते पारमार्थिकः, तत्र प्रतीयमानो भेद एव काल्पनिकः[१]।

त्रिपुरारहस्यमते तु सर्वस्य प्रपञ्चस्य काल्पनिकता[२]। इत्ययं विशेषः।

शाक्तसिद्धान्तप्रतिपादकस्य परशुरामकल्पसूत्रस्यापि षट्त्रिंशतत्त्वानि सम्मतानि। तदुक्तं भगवता शाक्ताचार्यवर्येण परशुरामेण,

'षट्त्रिंशत् तत्त्वानि विश्वम्'[३]।

सूत्रकारेण तेषां तत्त्वानां नामानि स्वरूपाणि च कण्ठरवेण नोक्तानि, रामेश्वरप्रणीतायां[४] परशुरामकल्पसूत्रवृत्तौ तु सूत्रस्यैतत्तात्पर्यं विस्तरेण प्रपञ्चितम्।

तत्र प्रथमतः[५] प्रलयावस्था वर्णिता,

'यस्मिन् काल इदं विश्वं परशिवकुक्षिस्थं सूक्ष्मरूपेण तिष्ठति, स एव प्रलयः' 'प्रलयो नाम परब्रह्मणः केवलनिजस्वरूपेणावस्थानम्।'

तदानीं जीवास्तदीयादृष्टानि पञ्चभूतादीनि तत्त्वानि च वटबीजे वटवृक्ष इव सूक्ष्मरूपेण परशिवे तिष्ठन्ति। सृष्टिप्राक्काले च जीवानामदृष्टवशेन

---

१. वरिवस्यारहस्यप्रकाशः, (१।३)।

२. यद्यपि शाक्तैरपि 'सोऽहम्' इति प्रत्यभिज्ञात्मकं सविकल्पकं ज्ञानमेव मोक्षसाधनमभ्युपगम्यते, समर्थ्यन्ते च षट्त्रिंशत्तत्त्वानीति प्रत्यभिज्ञापक्षे पक्षपातो दर्शितः, तथाऽपि काश्मीरकप्रत्यभिज्ञादर्शने तत्त्वानामपारमार्थिकता क्वाऽपि न प्रतिपादिता, एतैस्तु शाक्तैस्तत्त्वानां प्रतिविम्बसदृशतामङ्गीकृत्य तेषामपारमार्थिकतैव पुनः पुनरुद्घोषिता इति विशेषः सुधीभिराकलनीयम्।

३. परशुरामकल्पसूत्रम्, (१।४)।

४. अयं रामेश्वरो विख्यातवैदुष्यकीर्तेर्महापण्डितस्य शाक्तदार्शनिकाग्रेसरस्य भास्कररायस्य प्रशिष्य आसीत्। See, Preface ( P, IX and XI ) of Paraslurama-Kalpasutra. Gaekwads Oriental Series No. XXII.

५. 'तत्रायं सिद्धान्तः।' —परशुरामकल्पसूत्रे, वृत्तौ (१।३)।

शिवशक्त्योर्योगे सति सृष्टिः प्रवर्तते[1]।

अस्ति परमशिवे सूक्ष्मरूपा शान्तानाम्नी नित्या शक्तिः, सेयं परमशिवाद् न व्यतिरिच्यते, तस्याः शक्तेः कार्यभूता इच्छाज्ञानक्रियात्मिकास्तिस्रः शक्तयो या एतन्मते परमेश्वरस्य 'सिसृक्षा' इति व्यपदिश्यन्ते, ताभिः शक्तिभिर्निजस्वरूपावस्थितस्य परमशिवस्य योगे 'अर्थसृष्टिः' 'शब्दसृष्टि'श्चेति द्वे सृष्टी अङ्कुरच्छायावद् युगपद् भवतः[2]।

पूर्वोक्तया सिसृक्षया विशिष्टः परमशिव एव तत्त्वानामादिमं शिवतत्त्वम्। सा च प्रपञ्चवासनारूपा सिसृक्षा शक्तितत्त्वम्। सूक्ष्मावस्थया स्वस्मिन् विद्यमानस्य जगतः स्वाभेदेनाहन्तया 'तदहम्' इति यत् सुस्पष्टं ज्ञानम्, तादृशज्ञानविशिष्टं सदाशिवतत्त्वम्। 'इदंजगद्' इति भेदविषयिणी या दृष्टिः, तादृशदृष्टिविशिष्टमीश्वरतत्त्वम्। 'जगदहमेव' इत्यात्मकं यत् सदाशिवनिष्ठमभेदज्ञानं तद् विद्यातत्त्वम्। 'इदं जगद्' इत्याकारकमीश्वरनिष्ठं यद् भेदज्ञानं तदेव मायातत्त्वम्[3]। पूर्वोक्तविद्यातिरोधानसामर्थ्यविशिष्टं विद्याविरोधि अविद्यातत्त्वम्। जीवस्य वस्तुतः परमशिवाभिन्नतया तत्र स्थितं स्वाभाविकं सर्वकर्तृत्वं किञ्चित्कर्तृत्वरूपेण सङ्कुचितं कलातत्त्वम्। जीवनिष्ठा या स्वाभाविकी नित्यतृप्तिः सैव केषुचिद् विषयेषु अतृप्त्या सङ्कुचिता

---

१. यद्यपि सदैव शिवशक्त्योर्योगो विद्यते, तयोः परस्परमव्यतिरेकात्, तथाऽपि यथा न्यायनये जीवात्मनां विभुत्वाद् निरन्तरं मनसा योगेऽपि ज्ञानकरणीभूतो विलक्षण आगन्तुक आत्ममनसोः संयोगोऽङ्गीक्रियते, तथैव सृष्टेः प्राक्काले शिवशक्त्योः कश्चन विलक्षणः सृष्ट्यनुकूल आगन्तुकसंयोग एतन्मते स्वीक्रियते इति बोध्यम्।

२. मतमिदं भास्कररायस्यापि। तदुक्तं वरिवस्यारहस्यप्रकाशे,

'सा च सृष्टिर्द्वेधा—अर्थमयी शब्दमयी चेति।....सा च द्विविधाऽपि सृष्टिः समानकालोत्पत्तिका समानकालाभिवृद्धिशालिनी च, यथा बीजादङ्कुरतच्छाये। तत्र छायादर्शने वृक्षानुमितिरनुभवसिद्धा। सा च च्छायायां वृक्षसमानकारत्वं वृक्षाऽविनाभावं च विनाऽनुपपन्नेति तद् द्वयमपि कल्प्यम्।' इति। (२।६७-६८)।

३. 'माया विभिन्न(विभेद)बुद्धिर्निजांशभूतेषु निखिलभूतेषु।
नित्यं तस्य निरङ्कुशविभवं वेलेव वारिधे रुन्धे॥'—षट्त्रिंशत्तत्त्वसन्दोहः, ५।

रागतत्त्वम् । जीवनिष्ठायाः स्वाभाविकनित्यताया आच्छादने सति सा जन्म-मरणादिविकारयोगात् सङ्कुचिता सती कालतत्त्वरूपतां प्रतिपद्यते ।

परमशिवजीवयोरभेदात् परमशिवस्य सर्वस्वातन्त्र्यं जीवेऽपि वर्तते, अविद्यया तस्य तिरोधाने सति येन जीवस्य नियमनं क्रियते, तदेव नियति तत्त्वम् ।

पूर्वोक्ताऽविद्या-कला-राग-काल-नियतिसमुपेतः परमशिव एव जीव-तत्त्वम् ।

एतानि द्वादशसङ्ख्याकानि तत्त्वानि, अन्यानि च प्रकृत्यादीनि पृथिवीतत्त्वान्तानि चतुर्विंशतिसङ्ख्याकानि पूर्वत्र प्रदर्शितानि तत्त्वानि सन्ति तेषां सर्वेषां सङ्कलनया षट्त्रिंशत् सङ्ख्या भवति[1] ।

एतन्मतेऽपि परमशिवस्य जीवभावापादकेषु अविद्यादिकञ्चुकेषु काल-स्यापि प्रवेशात् कालस्य जीवकोटावेव निवेशः । एवञ्च कालस्य जीवान्तर्ग-तत्वम्, जीवसम्बन्धाच्च बाह्यवस्तुषु कालसम्बन्धो व्यवह्रियते, न तु बाह्येषु कश्चित् साक्षात् कालसम्बन्धो वर्तते[2] ।

तथा च कालतत्त्वविषये त्रैपुरसम्प्रदायानुगामिनां सर्वेषां शाक्तानां मतमविलक्षणमेवेति स्थितम्[3] ।

## शाक्तमतम्

( पद्मपादाचार्यकृतप्रपञ्चसारविवरणोक्तम् )

प्रपञ्चसारविवरणे पद्मपादाचार्यैरष्टादशसङ्ख्याकानि शाक्ततत्त्वानि

---

१. अत्र प्रमाणत्वेन परमानन्दतन्त्रवचनजातम् उपन्यस्तं परशुरामकल्पसूत्रवृत्तौ ।

२. प्रत्यभिज्ञामतेऽपि इत्थमेव जीवद्वारेण बाह्यवस्तुषु कालसम्बन्धः प्रतिपादितः ।

३. त्रिपुरारहस्यपरशुरामकल्पसूत्रयोस्त्रैपुरसम्प्रदायानुगतत्वेन भास्कररायस्यापि त्रिपुरोपासकत्वेन त्रैपुरसम्प्रदायान्तर्गतत्वं मन्तव्यम् । परशुरामकल्पसूत्रस्य व्याख्याता रामेश्वरोऽपि त्रैपुरसम्प्रदायानुसारी, प्रशिष्यत्वाद् भास्कररायस्य ।

प्रदर्शितानि,[1] तत्र निवृत्तिप्रतिष्ठादिषु पञ्चसु शक्तिषु षट्त्रिंशत् तत्त्वान्यन्तर्भूतानि। तत्र विद्याशक्तौ मायाविद्याकालकलारागनियतिसहितस्य जीवस्य प्रवेशः[2]।

एवञ्च कालविये न किमपि वैलक्षण्यं वर्तते पूर्वोक्तशाक्तमतापेक्षयैतस्मिन् मते।

शारदातिलके तु त्रैपुर(शाक्त)मते सप्तदशतत्त्वानि प्रोक्तानि[3], तत्रापिपक्षे विद्यातत्त्वे जीवस्यान्तर्भावः, जीवे च कालतत्त्वमन्तर्भूतमिति प्रतिभाति, कालश्चानुपदोक्तस्वरूप एव।

## शैवमतम्

मानसोल्लासे पौराणिकं शैवञ्च मतं स्पष्टमुपबृंहितम्। तत्र च पौराणिकसिद्धान्तसिद्धेभ्यस्त्रिंशत्सङ्ख्याकेभ्योऽन्ये षट् पदार्थाः शैवमते स्वीकृताः।

---

१. 'निवृत्तिसञ्ज्ञा च प्रपञ्चसारे, (१।५०)। शाक्तमपि तत्त्वं निवृत्ति-प्रतिष्ठा-विद्या-शान्ति-शान्त्यतीत-विन्दु-कला-निरोधिका( निरोधिनी )नाद-नादान्त-शक्ति-व्यापिनी-व्योमरूपाऽनन्तानाथाऽनाश्रितासमन्युन्मनीलक्षणं सूचितम्। 'स्युः पञ्च शक्तयः' 'नादकलादिभूताश्च' त्रयोदश स्युरिति तस्यार्थः।

'नादो नाद एव, कला विन्दुः,'तावादिभूतौ येषाम्' इति विग्रहः।

—प्रपञ्चसारविवरणम्, (१।५९)।

'बिन्द्वादयः बिन्दुकलानिरोधिकाः, नादादयश्च नादनादान्तशक्त्यादयः।

—प्रपञ्चसारविवरणव्याख्या प्रयोगक्रमदीपिका।

२. शिवार्कमणिदीपिका, (२।२।३८)।

३. 'उक्तानि दशतत्त्वानि सप्त च त्रिपदात्मनः।' (५।८२)।

'निवृत्त्याद्याः कलाः पञ्च, ततो बिन्दुः, कला पुनः॥
नादः शक्तिः सदापूर्वः शिवश्च प्रकृतिर्विदुः।
आत्मा विद्या शिवः पश्चाच्छिवो विद्या स्वयं पुनः॥
सर्वतत्त्वञ्च तत्त्वानि प्रोक्तानि त्रिपदात्मनः॥' —शारदातिलकम्, (५।८९-९१)।

त्रिपदात्मनः = त्रिपुराद्याः। —राघवभट्टटीका।

सर्वाधिष्ठानं सदाशिवाख्यं निर्गुणं तत्त्वं विन्दुनाम्ना प्रसिद्धम्, तस्यैव विन्दोः प्रणवरूपेण सर्वार्थप्रकाशकत्वेनाभिव्यक्तं स्वरूपान्तरं नादो नाम ।

मायाविद्याभ्यामन्या सर्वाधिष्ठानसामर्थ्यरूपा शक्तिस्तया समुपेतो लीलानिग्रहधारी परमेश्वरः शिवशब्दाभिधेयः । एतस्य परमेश्वरस्य द्वावस्थाविशेषौ शान्तातीतौ । पौराणिकसम्मतत्रिंशत्तत्त्वसहिता एते षट् पदार्थाः शैवसिद्धान्तसम्मताः । तथा च एतेषां मते तत्त्वापराभिधानाः षट्त्रिंशत्पदार्थाः स्वीकृताः[1] ।

पौराणिकसिद्धान्तापेक्षया एतेषां सिद्धान्ते कालविषये नास्ति कश्चन विशेषः, अत्र कालविषये विशेषानभिधानेन पौराणिकसिद्धान्तस्यैव एतैरभ्युपगतत्वसूचनात् ।

इदञ्च शैवमतं प्रत्यभिज्ञादिशैवमतापेक्षया विलक्षणमिति सुधीभिराकलनीयम् ।

प्रत्यभिज्ञामतञ्च पश्चात् स्फुटीभविष्यति ।

## शैवविशिष्टाद्वैतमतम्

शैवसिद्धान्तानुयायिना श्रीकण्ठाचार्येण विरचिते ब्रह्मसूत्रशैवविशिष्टाद्वैतभाष्ये सिद्धान्तागमसरणिमनुसृत्य तत्त्वानि निरूपितानि ।

---

१. बिन्दुनादौ शक्तिशिवौ शान्तातीतौ ततः परम् ।
षट्त्रिंशत्तत्त्वमित्युक्तं शैवागमविशारदैः ॥—मानसोल्लासे, ( २।४१-४३ ) ।

तथा च, १. बिन्दुः ( सदाशिवः ), २. नादः ( प्रणवः ), ३. शक्तिः ( सामर्थ्यम् ), ४. शिवः ( परमेश्वरः ), ५. शान्तः ( परमेश्वरस्यावावस्थाविशेषः सृष्टिपालनोपयोगी ), ६. अतीतः ( परमेश्वरस्यैवावस्थाविशेषः संहारोपयोगी ), एते षट्, पूर्वोक्ताश्च पौराणिकमतसिद्धास्त्रिंशत्पदार्था इत्येषां मेलनेन षट्त्रिंशत्सङ्ख्यका भवन्ति ।

'शैवागमविशारद'ग्रहणेनास्याः कल्पनाया मूलमिदं ( शैवागमः ) सूच्यते ।
—वृत्तान्तव्याख्या ।

अत्र मते सिद्धान्तागमसिद्धान्तादयं विशेषः,

सिद्धान्तागममते सकलतत्त्वातीतः स्वाभिन्नशक्तिसमेतः परमेश्वरो जगतो निमित्तकारणमेव, न तूपादानम्, अत्र मते सूक्ष्मावस्थजीवमायामहामायास्वरूपापन्नो महेश्वरो जगतो निमित्तमुपादानञ्चेति[1]। तत्र प्रथमं महामायादीनि शुद्धविद्यान्तानि शुद्धानि पञ्च तत्त्वानि समभिव्यज्यन्ते, ततस्तस्मादेव महेश्वराद् मायादीनि पृथिव्यन्तानि तत्त्वानि तप्रादुर्भवन्ति।

कालविषये चैतदीयसिद्धान्तः सिद्धान्तागमसिद्धान्ताद् अविलक्षण एवेति न पृथङ् निरूपणमर्हति।

परिणामवाद एवैतदीयः सिद्धान्तः।

## सिद्धान्तागममतम्

अष्टाविंशतिसङ्ख्याकाः सिद्धान्तागमाः सन्ति, ते च, शैवागमरौद्रागमभेदेन द्विविधाः। तत्र शैवागमानां कामिकादिभेदेन दश भेदाः, तेषु कामिकागमस्य त्रय उपागमाः,

नारसिंहवक्तारभैरवोत्तरनामकाः। तत्र 'श्रीमृगेन्द्रागम एव नारसिंहागमः' इति स्थितिः।

तत्र मते षट्त्रिंशत्पदर्थास्तत्त्वपदव्यपदेश्याः सन्ति, तत्त्वातीतस्तु शिवश्चित्स्वरूपः। शक्तिरपि तदीया चित्स्वरूपैव, चितोऽचिद्रूपा शक्तिरेतन्मते नाङ्गीक्रियते[2]।

सा च शक्तिश्चित्स्वरूपे शिवे संश्रिता ततः पृथङ् न गण्यते, शक्तिशक्तिमतोरभेदाभ्युपगमात्[3]।

तत्त्वजातमत्र शास्त्रे 'अध्व'शब्देन व्यवह्रियते। अध्वा च द्विविधः,

---

१. ब्रह्मसूत्रश्रीकण्ठभाष्ये शिवार्कमणिदीपिकायाञ्च, (२।२।३८)।

२. 'शक्तिर्नाचेतना चितः'। —श्रीमृगेन्द्रे, (३।४)।

३. 'शक्तिशक्तिमतोर्भेदासिद्धेः'। —परमोक्षनिरासकारिकावृत्तिः, १०।

(क) शुद्धः,

(ख) अशुद्धश्च ।

तत्र शुद्धाध्वन उपादानकारणं विन्दुः, यस्यापराणि नामानि सन्ति शिवतत्त्वम्, परबिन्दुः, परमाया, शुद्धमाया, कुटिला, कुण्डलिनी, महामाया, परनाद इत्यादीनि[1] । परमेश्वराधिष्ठितस्य बिन्दोः प्रथमः परिणामः शक्तितत्त्वम्, द्वितीयः परिणामः सदाशिवतत्त्वम् तृतीयः परिणामः ईश्वरतत्त्वम्, चतुर्थः परिणामो विद्यातत्त्वम्[2] । एतानि बिन्दुप्रभृतीनि पञ्च तत्त्वानि शुद्धानि[3] ।

अशुद्धाध्वानस्तूपादानकारणं माया । ईश्वरकोटिनिविष्टो जीवविशेषोऽनन्तः, तेनाधिष्ठितमायातः प्रथमतः काल उत्पद्यते, कालादनन्तरं मायातत्त्वादेव नियतितत्त्वम्, तदनन्तरं मायात एव कलातत्त्वं प्रादुर्भवति । कलातत्त्वाद् 'विद्या', 'रागः', 'अव्यक्तम्' चेति त्रीणि तत्त्वानि । जीवानां नित्यत्वेऽपि ते कालकलानियतिविद्यारागतत्त्वैरावृता भोक्तृत्वपदवीं यान्ति यदा, तदा ते 'पुरुषतत्त्वम्' इति व्यवदिश्यन्ते[4] ।

अत एव शास्त्रे कलादीनां पञ्चानां कञ्चुकत्वेन व्यवहारः । अव्यक्तात्

---

१. 'जायतेऽध्वा यतः शुद्धो वर्तते यत्र लीयते ।
स विन्दुः परनादाख्यः.... .... .... .... ....॥' —रत्नत्रयम्, २२ ।
अपि च, शिवार्कमणिदीपिकायाम् अघोरशिवाचार्यकृतायाम् ( २।२।३८ ), भोजदेवकृततत्त्वप्रकाशवृत्तौ च ( २१, २५ ) ।

२. भोजदेवकृततत्त्वप्रकाशे, ( २७, २८, २९, ३० ) ।

३. तत्त्वप्रकाशे, २१ ।
'तत्त्वानि शुद्धान्युच्यन्ते शिवः शक्तिः सदाशिवः ।
ईश्वरो विद्यया सार्धं पञ्च शूद्धान्यमूनि हि ॥'—शारदातिलकम्, ( ५ । ८३ ) ।

४. 'तत्त्वैरेभिः कलितो भोक्तृत्वदशां यदा पशुर्नीतः ।
पुरुषाख्यतां तदाऽयं लभते तत्त्वेषु गणनाञ्च ॥' —तत्त्वप्रकाशे, ४९ ।
'कलादिपञ्चतत्त्वोपवृंहितोऽणुः भोक्तृत्वेन पुंस्त्वनिर्देशं याति ।'
—अघोरशिवाचार्यकृततत्त्वप्रकाशवृत्तौ ।

सत्त्वरजस्तमोरूपं गुणतत्त्वमाविर्भवति, गुणतत्त्वाद् सात्त्विकराजसतामसभेदभिन्नं त्रिविधं बुद्धितत्त्वमभिव्यज्यते, बुद्धितत्त्वात् सात्त्विकराजसतामसभेदेन त्रिविधोऽहङ्कारः प्रादुर्भवति, तस्य च त्रिविधाहङ्कारस्य तैजसवैकारिकभूतादीत्येवं तिस्रः सञ्ज्ञा यथाक्रमम् । तेषु सात्त्विकादहङ्काराद् मनस्सहितानि पञ्च ज्ञानेन्द्रियाणि[1] समुत्पद्यन्ते । राजसादहङ्कारात् पञ्च कर्मेन्द्रियाणि[2] जायन्ते ।

---

१. 'श्रोत्रं त्वक् चक्षुषी जिह्वा नासा च मनसा सह ।
प्रकाशान्वयतः सत्त्वास्तैजसश्च स सात्त्विकः ।' —श्रीमृगेन्द्रागमे, ( १२।३ ) ।

२. 'वाणी पाणी भगः पायुः पादौ चेति रजोभवाः ।
कर्मान्वयाद् रजोभूयान् गणो वैकारिकाश्रयः ॥' —श्रीमृगेन्द्रागमे, ( १२।४ ) ।
एषां कर्मेन्द्रियाणां व्यापारास्तत्त्वप्रकाशे ५९ कारिकायां प्रदर्शिताः, 'वचनादानविहरणोत्सर्गानन्दाश्च कर्मैषाम् ॥' इति,

वागिन्द्रियस्य व्यापारो भाषणम्, हस्तयोरादानम् ( ग्रहणम् ), पादयोर्गमनम्, पायोर्मलापनयनम्, उपस्थस्यानन्द इत्येवं बोध्यम् । अत्रेयमाशङ्का समुन्मिषति,

'ग्रीष्मे खलु सर्वशरीरात् स्वेदनिर्गमोऽनुभूयते । उत्सर्गश्च पायोरिन्द्रियस्य कर्म, न च तदिन्द्रियं मुखमण्डलादौ विद्यते । किञ्च मुखतो निस्सरन्ती लाला प्रत्यक्षीक्रियते, न च मुखे पायुरिन्द्रियमस्ति । एवम्, छिन्नहस्तो बाहुभ्यां वस्तु समाददानो दृश्यते, तत्र पाणिरूपस्येन्द्रियस्याभावादिदं नोपपद्यते । पुत्रादीनां मुखादिषु चुम्बनादिभिरानन्दसम्वेदनमुपजायमानमपह्नोतुं न शक्यते । एवम्विधातत्तदिन्द्रियनियतत्वेनाम्नाता व्यापारा अन्यत्रापि दृश्यन्ते । तस्मात् कर्मेन्द्रियाणामुक्तो व्यापारनियमो मुधैवेति ।

अत्र समाधीयते,

ज्ञानेन्द्रियाणां मध्ये त्वगिन्द्रियं यथा सर्वशरीरव्यापकमभ्युपगम्यते तथैव सर्वाण्यपि कर्मेन्द्रियाणि सर्वशरीरव्यापकानीति स्वीक्रियते । अत एव तत्र तत्र शरीरावयवेषु दृश्यमानास्तत्तत्कर्मेन्द्रियव्यापारा अन्यप्रयुक्तत्वेन नाशङ्कनीयाः, किन्तु, तत्तत्कर्मेन्दियाणामेव ते व्यापार मन्तव्याः । न च कर्मेन्द्रियाणां सर्वशरीरव्यापकत्वस्वीकारे, तेषां तत्तन्नियतस्थानवर्तित्वं तत्र तत्रोपदिश्यमानं विरुद्धयेतेति

भूतादेस्त्वहङ्कारात् पञ्च तन्मात्राणि[1], पञ्चभ्यस्तन्मात्रेभ्यः पृथिव्यादीनि[2] पञ्चमहाभूतानीन्यभिव्यक्तानि भवन्ति ।

यद्यपि, एतेषां सङ्कलनया सप्तत्रिंशत् सङ्ख्या भवति, तथापि अव्यक्तमध्य एव गुणतत्त्वस्यान्तर्भावात् तत्त्वानां षट्त्रिंशत् सङ्ख्या न विरुध्यते ।

शिवजीवमहामाया(बिन्दु)मायानामनादित्वमभ्युपेत्य प्रलयेऽपि विद्यमानताऽङ्गीकृतेति एतेषां नित्यता[3] ।

---

शङ्कितव्यम्, कर्मेन्द्रियाणां सुस्पष्टाभिव्यक्तिस्थानकथनाभिप्रायेणैव तत्तत्स्थानविशेषोपदेशस्य सामञ्जस्यसम्भवात् । उक्तञ्चैतत्, प्रत्यभिज्ञापरमाचार्यैरभिनगुप्तपादैः, शैवाचार्याणामग्रेसरैरघोरशिवाचार्यैश्च,

'सर्वदेहव्यापकानि च कर्मेन्द्रियाणि अहङ्कारविशेषात्मकानि । तेन च्छिन्नहस्तो बाहुभ्यामाददानः पाणिनैवादत्ते, एवमन्यत् । केवलं तत्तत्स्फुटपूर्णवृत्तिलाभस्थानत्वात् पञ्चाङ्गुलिरूपमधिष्ठानमस्योच्यते ।' —प्रत्यभिज्ञाविमर्शिनी, ( ३।१।११ ) ।

'त्वगिन्द्रियवत् सर्वशरीरव्यापकत्वेन एषाम् ( कर्मेन्द्रियाणाम् ) अभ्युपगमात् ।'

—तत्त्वप्रकाशवृत्तिः, ९ ।

'त्वगिन्द्रियवत् सर्वशरीरव्यापकत्वेन तेषां कर्मेन्द्रियाणामिष्टत्वात्' ।

—श्रीमृगेन्द्रवृत्तिदीपिका, (१२।८)

१. 'शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः ।
गुणाविशिष्टास्तन्मात्रा .... .... .... ॥' —श्रीमृगेन्द्रागमः, (१२।५)

स्त्रीलिङ्गोऽयमिह [श्रीमृगेन्द्रवृत्तौ] तन्मात्राशब्दः, न तु सर्वत्र, नपुंसकलिङ्गे भूयसां प्रयोगाणां दर्शनाद्, यथा;

'शब्दस्पर्शादीनां पञ्चानामविशेषा अनभिव्यक्तविशेषाणि सूक्ष्मरूपाणि पञ्च तन्मात्राणीत्युच्यते' —तत्त्वप्रकाशवृत्तिः, ६१ ।

२. 'तन्मात्रेभ्यः खपवनतेजोऽम्भःक्ष्मेति पञ्च भूतानि ।' —तत्त्वप्रकाशः, ६० ।

३. 'शम्भुः पुरुषो माया नित्यं विभु कर्तृशक्तियुक्तञ्च ।' —तत्त्वत्रयनिर्णयः, ३ ।

'शम्भुशब्देन समवेतशक्त्यविनाभूतः शिवः कथ्यते, पुरुषशब्देन च जात्येकवचनेन सर्वे आत्मानः ( जीवाः ), मायाशब्देन च तन्त्रोच्चारितेन मायामहामाया-( बिन्दु )रूपं शुद्धाशुद्धजगदुपादानद्वयमुच्यते ।'

—अघोरशिवाचार्यकृता तत्त्वत्रयनिर्णयवृत्तिः, ३ ।

बिन्दुरूपाया महामायाया परिणामरूपाः सन्ति कला उपर्युपरि स्थिताः, ताश्च 'निवृत्तिः', 'प्रतिष्ठा', 'विद्या', 'शान्तिः', 'शान्त्यतीता' इति संज्ञाभिर्व्यपदिश्यन्ते। तत्र, पृथिवीतत्त्वं निवृत्तिकलायामवतिष्ठते। जलादीनि अव्यक्तान्तानि त्रयोविंशतिस्तत्त्वानि प्रतिष्ठाकलायां स्थितानि, पुरुषप्रभृतीनि मायान्तानि सप्ततत्त्वानि विद्याकलायां वर्तन्ते। विद्यातत्त्वमीश्वरतत्त्वञ्च शान्तिकलायां प्रतिष्ठिते। सदाशिवतत्त्वं शक्तितत्त्वञ्चेनि द्वयं शान्त्यतीतायां कलायां विद्यते[1]

इमाश्च कला जीवानां भोगापादककिञ्चित्कर्तृत्वरूपकलातो भिन्नाः, एताः खलु बिन्दुरूपायाः परशक्तेः परिणतिविशेषाः, पूर्वोक्ता कला तु मायायाः कार्यभूतेति वैलक्षण्यं सुस्पष्टमेव।

एतन्मते संक्षेपतस्त्रयः पदार्थाः पति-पशु-पाशख्याः[2] पर्यवसिताः,

तेषु पशुसञ्ज्ञका जीवाश्चेतना अपि स्वातन्त्र्यरहिताः, पाशाश्चाचेतनाः तेभ्य उभयेभ्यो विलक्षणश्चेतनः स्वतन्त्रश्च पतिः परमेश्वरः[3]।

---

१. 'निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्च पञ्चमी।
शान्त्यतीता कला एता याभिर्व्याप्तोऽध्वपञ्चकम् (कः) ॥ —रत्नत्रयम्, ८६।

'विन्दोरेवावस्थाभूताः कलाकारवृत्तयः, ततः कलोपादानत्वेनापि विन्दुसिद्धिः।
—रत्नत्रयव्याख्या, अघोरशिवाचार्यकृता, ८५।

'एतेषां परशक्तिव्यतिरिक्तानां तत्त्वानां तत्तत्तत्त्वप्रतिष्ठितभुवनानां चाधारभूता निवृत्तिः, प्रतिष्ठा, विद्या, शान्तिः, शान्त्यतीतेति सञ्ज्ञाभिः प्रसिद्धा उपर्युपरि अवस्थिताः पञ्च कलाः परशक्तिप्रभवाः। तत्र शतकोटियोजनमितब्रह्माण्डरूपं पृथिवीतत्त्वं निवृत्तिकलायामवतिष्ठते। जलाद्यव्यक्तान्तानि त्रयोविंशतिस्तत्त्वानि प्रतिष्ठायाम्। पुरुषादीनि मायान्तानि सप्त तत्त्वानि विद्यायाम्। शुद्धविद्या महेश्वरश्च शान्ति-कलायाम्। सदाशिवः शक्तिश्च शान्त्यतीतायाम्।'
—शिवार्कमणिदीपिका, (२।२।३८)।

२. 'अत्र च शास्त्रे पतिपशुपाशाख्यास्त्रयः पदार्थाः।' —मृगेन्द्रवृत्तिः, (१।१।१)।

३. 'तत्र पशूनामस्वातन्त्र्यात्, पाशानामचैतन्यात्, तद्विलक्षणस्य पत्युः प्रथममुद्देशः। चेतनत्वसाधर्म्यात् पशूनां तदानन्तर्यम्। अवशिष्टानां पाशानामन्ते विनिवेश इति क्रमनियमः।' —सर्वदर्शनसङ्ग्रहशैवदर्शने।

परमेश्वरस्य जगज्जन्मस्थितिध्वंसतिरोधानविमुक्तिलक्षणानि पञ्च कृत्यानि, तेषां कृत्यानां निष्पत्तौ चिद्रूपस्य परमेश्वरस्य पूर्वोक्ता चिद्रूपा शक्तिः करणम्[१]।

सा च शक्तिः पतिपदार्थे एवान्तर्भूतेति न पृथग्गण्यत इति पूर्वमेवाभिहितम्।

पशुसञ्ज्ञका जीवाश्च व्यापका नित्या अनन्ताश्चैतन्यस्वरूपाः। त एव पुरुषतत्त्वमित्युक्तम्, तेषां वक्ष्यमाणपाशसम्बन्धापाये शिवसमत्वप्राप्तिरूपो मोक्षो भवति[२]।

पाशाश्च चतुर्विधाः[३], तत्र जीवानामज्ञानम् 'आणवः' पाशः[४]।

तच्चाज्ञानमेकमनादि नानाविधाभिरनित्याभिः शक्तिभिः समुपेतम्। पशुपते रोधशक्तिर्द्वितीयः पाशः, सा च भगवती रोधशक्तिरन्येषां पाशानां बन्धशक्त्यनुग्राहिकेति वस्तुतः पाशत्वाऽभावेऽपि पाशत्वेनोपचर्यते। तदुक्तं श्रीमृगेन्द्रे,

'तासां माहेश्वरी शक्तिः, सर्वानुग्राहिका शिवा।
धर्मानुवर्तनादेव पाश इत्युपचर्यते॥'[५] इति

---

१. 'शक्तिरेवास्य विश्वेशितुः करणम्।' —मृगेन्द्रवृत्तिः, (१।३।३-४)।

२. नाव्यापको न क्षणिको नैको नापि जडात्मकः।
नाकर्ता भिन्नचिद्योगी पाशान्ते शिवताश्रुतेः॥ —श्रीमृगेन्द्रे, १।६।७।

'येषाम् ( पाशानाम् ) अपगमे, पाश्यत्वाद् मुक्ता अणव = आत्मानः, जगतः पतयो भवन्ति, तत्र शिववदन्यानधीनस्वातन्त्र्याभिव्यक्तिर्मुक्तात्मनां पतिसमत्वम्।' —मृगेन्द्रवृत्तिः, (१।७।१)।

३. 'प्रावृतीशबले कर्म, मायाकार्यं चतुर्विधम्।
पाशजालं समासेन ···· ···· ···· ···· ····॥' —मृगेन्द्रे, (१।२।७)।

४. 'अविद्या अज्ञानमञ्जनमाणवः पाशः।' —मृगेन्द्रवृत्तिः, (१।७।१)।

५. तासाम् = मलशक्तीनां चित्क्रियासंनिरोधकत्वलक्षणस्य धर्मस्यानुवर्तनाद् धेतोः शैवी शक्तिः पाशतयोपचर्यते, न च तत्र मुख्यं पाशत्वम्।' —श्रीमृगेन्द्रवृत्तिः, ( ९।७।११ )।

धर्माधर्मात्मकं कर्म तृतीयः पाशः, तच्च कर्मप्रवाहरूपेणानादि[१]। स्वकार्यसहिता माया चतुर्थः पाशः, सेयं माया एका भ्रान्तिज्ञानजनिका अशुद्धाध्वान्तर्गतजगदुपादानरूपा विचित्रशक्तिमती कर्मसापेक्षा सती जीवानां बन्धहेतुः सर्वव्यापिनी नित्या च[२]। प्रलये मायायां निखिलं प्रपञ्चजालं सूक्ष्मरूपेण प्रलीनं तिष्ठति, सृष्टौ चाभिव्यक्तिं यातीति शैवानामेतेषां सत्कार्यवाद एवाभिप्रेतः[३]। एतेषु चतुर्षु पाशेषु जीवस्य स्वभावसिद्धस्वरूपावरणमाणवपाशरूपस्याज्ञानस्य कृत्यम्, रोधशक्तेस्तिरोभावनम्, कर्मणां स्वानुरूपफलोत्पादकत्वम्, मायायाः शरीरेन्द्रियादीनामुत्पादनञ्च कार्यम्।[४]

'कालादिपरिकलिता एव जीवा भोगभाजो भवन्ति' इति पूर्वं निरूपितम्, तत्र जीवानां कर्मजनिते सुखदुःखोपभोगादौ प्रेरणैव कालस्य कृत्यम्।[५] न चैतत् कालतत्त्वं नियतितत्त्वेन गतार्थमिति शङ्कनीयम्, यतस्तत्तत्पुरुषाणां स्वस्वकर्मजनिते भोगे नियमनं नियतितत्त्वस्य कार्यम्, तया

---

१. 'कर्म धर्माधर्मात्मकं बीजाङ्कुरवत् प्रवाहरूपेणानादि।'

—सर्वदर्शनसङ्ग्रहे शैवदर्शनम्।

२. 'तदेकमशिवं बीजं जगतश्चित्रशक्तिमत्।
सहकार्यधिकारान्त संरोधि व्याप्य नश्वरम्॥ —मृगेन्द्रम्, (१।९।१)।

३. मात्यस्यां शक्त्यात्मना प्रलये सर्वं जगत्, सृष्टौ व्यक्तिं यातीति माया। यथोक्तं श्रीमत्सौरभेये,

शक्तिरूपेण कार्याणि तल्लीनानि महाक्षये।
विकृतौ व्यक्तिमायान्ति स्वकार्येण कलादिना॥'

—मृगेन्द्रवृत्तिः, (१।२।७); सर्वदर्शनसङ्ग्रहशैवदर्शनञ्च।

४. 'स्वरूपावरणतिरोभावनफलजनकत्वशरीरेन्द्रियाद्युत्पादनरूपाः।'

—मृगेन्द्रवृत्तिदीपिका, (१।२।७)।

'एषाम् ( पाशानां ) ये धर्मव्यापाराः, ते नाम्नैव प्रदर्शिताः, अन्वर्थेन स्वाभिधानेन सूचिता' इति वृत्तेर्व्याख्यानमेषा दीपिकेति द्रष्टव्यम्।

५. 'प्रेरणात्मकं कालम् ...... ......।' —श्रीमृगेन्द्रवृत्तिदीपिका, (१।१०।१४)।

विना परकृतानां कर्मणामपरेण भोगप्रसङ्गस्य दुर्वारत्वात्, कालस्य तु प्रेरणैव कृत्यमित्यनयोर्विशेषः[१] ।

सोऽयं कालो नित्योऽव्यापकोऽनेकश्चाभ्युपेयते । स च जडः, न तु चेतनः, भूतभविष्यद्वर्तमानभेदेन त्रिप्रकारश्च[२] । शुद्धाशुद्धभेदेन तुर्नद्विविधः कालः, तत्र शुद्धेऽध्वनि शुद्ध कालः, अशुद्धेत्वध्वनि अशुद्ध इति संक्षेपः[३] ।

## वीरशैवमतम्

श्रीलिङ्गराजनिर्मिते 'विवेकचिन्तामणि'ग्रन्थे प्रथमपरिच्छेदे वीरशैवानां सिद्धान्तस्य निरूपणं वर्तते । शैवमतानुगामित्वाद् एतेषां पति-पशु-पाशाख्यास्त्रयः पदार्थाः सम्मताः ।

विशुद्धचिद्रूपे ब्रह्मणि वर्तमाना मिथ्याभूता माया एकाऽपि स्वीयवृत्तित्रयवशेन त्रिधा भिद्यते, तत्र विशुद्धसत्त्वप्रधाना माया, मलिनसत्त्वप्रधाना अविद्या, तमःप्रधाना च प्रकृतिः । तत्र मायायां प्रतिफलितं ब्रह्मचैतन्यं सर्वज्ञत्वादिगुणविशिष्ट ईश्वरः, स एव 'पति'पदार्थः । अविद्यायां प्रतिबिम्बितं ब्रह्मचैतन्यं जीवः, स च 'पशु'पदार्थः । पूर्वोक्ता प्रकृतिर्जीवानां भोगार्थमीश्वरसन्निधानलक्षणदर्शनमात्रेण विकारमासादयन्ती प्रपञ्चं कल्पयति, सा जीवानां भोगहेतुत्वात् 'पाश'पदार्थः । तत्र प्रकृतिरेव प्रथमतः कालत्वम-

---

१. 'असौ ( नियतिः ) पशुं कर्मजनिते सुखदुःखोपभोगे नियच्छति । न चायं कालस्य व्यापारः, तस्य कलनमात्रे चरितार्थत्वात् ।' --श्रीमृगेन्द्रवृवृत्तिः, (१।१०।१४) ।

२. 'अस्तु तर्हि नैयायिकाद्यभ्युपगत एवात्र क्रियाव्यतिरिक्तः कालः; सत्यम् । न तु नित्यो व्यापको वा तस्य विविधत्वेनानेकत्वात्, अचेतनत्वाच्च । एकरूपत्वे हि कालस्य सर्वदा पदार्थानामेककालता स्यात् । दृश्यन्ते च केचिद् वर्तमानाः, केचिदतीताः, भाविनश्च केचिद् भावाः । ततः कालस्यानेकत्वम्' इति, 'काल एव त्रिप्रकारः' इति च । —श्रीमृगेन्द्रवृत्तिदीपिका, (१।१०।१४) ।

३. 'शुद्धाध्वनि च····शुद्धरूपोऽपि कालः सम्भवत्येव ।'

—श्रीमृगेन्द्रवृत्तिदीपिका, (१।१०।१४) ।

वाप्य, तदनन्तरं तत्तकालवशेन साङ्ख्यसिद्धान्तसिद्धक्रमेण महत्तत्त्वादिरूपेण परिणमते । एवञ्च, एतन्मते प्रकृतेर्विकारविशेष एव कालः ।

अयञ्च, अद्वैतवादपक्षमाश्रितानां वीरशैवानां सिद्धान्तः ।

द्वैतसिद्धान्तानुयायिनां वीरशैवानां मतं श्रीवसवराजेन्द्रप्रणीते शिवतत्त्वरत्नाकरे निरूपितम् । तत्र सिद्धान्तागमरीतिमनुसृत्य पदार्था निरूपिताः । परन्तु तत्रेयान् विशेषः,

सिद्धान्तागमे षट्त्रिंशत् तत्त्वानि निरूपितानि, शिवतत्त्वरत्नाकरे पुनर्द्विपञ्चाशत् तत्त्वानि वर्णितानि[1] ।

एतदीयः कालविषयकसिद्धान्तस्तु पूर्वोक्तसिद्धान्तागमसिद्धान्ततुल्य[2] इति न तत्र पृथङ् निरूपणापेक्षा वर्तते ।

## माहेश्वरमतम्

महेश्वरप्रोक्तागमानुगामिनां माहेश्वराणां चत्वारो भेदा उक्ताः,

(क) शैवाः,

(ख) पाशुपताः,

(ग) कारुणिकसिद्धान्तिनः,

(घ) कापालिकाश्चेति ।

एतेषां सिद्धान्ते संक्षेपतः कार्य-कारण-योग-विधि-दुःखान्ताः पञ्च पदार्था निरूपिताः पशुसञ्ज्ञकानां जीवानां पाशाख्यबन्धविमोचनाय ।

तत्र साङ्ख्यसिद्धान्तसम्मतं महदादिकं कार्यम्,[3]

---

१. 'पृथग् भिन्नानि तत्त्वानि द्विपञ्चाशत्प्रभेदतः ।' —शिवतत्त्वरत्नाकरः, (१।७।१२) ।

२. 'कालः कला च नियतिः साक्षान्मायोद्भवानि च ।' 'कालस्त्रिविध एव च' ।
-- शिवतत्त्वरत्नाकरः, (१।७) ।

३. अत्र मते प्रकृतेः स्वातन्त्र्यं नाङ्गीक्रियत इति निरीश्वरसाङ्ख्यमताद्विशेषः । महदादिकार्यजातञ्च प्रतिपादितमत्रैव ग्रन्थे साङ्ख्यमतप्रपञ्चनावसरे ।

कारणम् = ईश्वरो निमित्तं प्रकृत्यपरपर्यायं प्रधानञ्चोपादानम्, योगः = समाधिः, विधिः = प्रातर्मध्याह्नसायाह्नरूपकालत्रयकर्त्तव्यस्नानादिः, दुःखान्तः = मोक्षः इति पञ्चानां पदार्थानां स्वरूपाणि ।

एतन्मते साङ्ख्यप्रक्रियासम्मतप्रकृतिमहत्तत्त्वप्रभृतिपदार्थानामङ्गीकारात् लालविषयेऽपि साङ्ख्यसिद्धान्तस्यैवाङ्गीकार इति प्रतिभाति[1] ।

यद्यपि पशुपतिना उपदिष्टाः पूर्वोक्ताः पञ्चैव पदार्थाः, तथापि जीवानामाधिक्यमत्र मते न निवार्यते, 'तेषामेव पशुसञ्ज्ञकानां विमोक्षाय महेशितुः शास्त्रप्रणयनम्' इति स्वीकारेण पृथग्जीवसत्ताया अङ्गीकारात् ।

---

१. 'माहेश्ररास्तु मन्यन्ते कार्यकारणयोगविधिदुःखान्ताः पञ्चपदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षणायोपदिष्टा;, पशुपतिरीश्वरो निमित्तकारणमिति वर्णयन्ति'

—ब्रह्मसूत्रशाङ्करभाष्ये, ( २।२।३७ ) ।

'चत्वारो माहेश्वराः, शैवाः, पाशुपताः, कारुणिकसिद्धान्तिनः कापालिकाश्चेति । सर्वेऽप्यमी महेश्वरप्रोक्तागमानुसारित्वाद् माहेश्वरा उच्यन्ते । कार्यं महदादिकम्, कारणं प्रधानमीश्वरश्च, योगः समाधिः, विधिस्त्रिषवणस्नानादिः, दुःखान्तो मोक्षः इति पञ्च पदार्थाः । पशवो जीवस्तेषां पाशो बन्धः, तन्नाशायेत्यर्थः ।'

—भाष्यरत्नप्रभायाम्, ( २।२।३७ ) ।

'चत्वारो माहेश्वराः, शैवाः, पाशुपताः, कारुणिकसिद्धान्तिनः, कापालिकाश्च । ते सर्वे महेश्वरप्रणीतागमप्रामाण्यात् केवलं निमित्तमीश्वरमिच्छन्ति·······कार्यं प्राधानिकं महदादि, कारणं महेश्वरः, योगः समाधिः, विधिस्त्रिषवणस्नानादिः, दुखान्तो मौक्षः इति पञ्च पदार्था । पशवः = जीवाः, तेषाम्पाशः = बन्धनम्, तद्विमोक्षो दुखान्तः··········। —आनन्दगिरिप्रणीतन्यायनिर्णये, (२।२।३७) ।

'माहेश्वराश्चत्वारः' शैवाः, पाशुपताः, कारुणिकसिद्धान्तिनः, कापालिकास्चेति । चत्वारोऽप्यमी महेश्वरप्रणीतसिद्धान्तानुयायितया माहेश्वराः । कारणम् = ईश्वरः । कार्यम् = प्राधानिकं महदादि । योगोऽपि = ओङ्कारादिध्यानधारणादिः । विधिः = त्रिषवणस्नानादिर्गूढचर्यावसानः । दुःखान्तः = मोक्षः । पशवः = आत्मानः । तेषां बन्धनम्, तद्विमोक्षो दुखान्तः ।'

—भामती, ( २।२।३७ ) ।

'गूढचर्या = स्वगुणाप्रख्यापनेन देशेषु वासः । —वेदान्तकल्पतरुः, (२।२।३७) ।

किञ्च 'जीवानां बहुत्वमेतन्मतसिद्धम्' इति प्रतिपादितं वेदान्तकल्पतरु-परिमलयोः[1]।

तथा च षट्पदार्थवादिन एते माहेश्वराः, न च कालतत्त्वमतिरिक्तं किञ्चिदेतन्मत इति स्थितम्।

एते माहेश्वरा द्वैतवादिन इति सुस्पष्टम्।

## पाशुपतमतम्

( आनन्दगिरिप्रोक्तम् )

माण्डूक्यकारिकाशाङ्करभाष्यव्याख्यानावसरे श्रीमताऽऽनन्दगिरिणा पाशुपतानां सिद्धान्ते 'एकत्रिंशत् पदार्था' इति प्रत्यपादि। ते च पदार्थाः,

पुरुषप्रकृतिमहत्तत्वप्रमुखाः साङ्ख्यसम्मताः पञ्चविंशतिसङ्ख्यकाः, अपरे च, (१) रागः, (२) अविद्या, (३) नियतिः, (४) कालः, (५) कला, (६) माया चेति षट्', एतेषां सङ्कलनयैकत्रिंशत् पदार्थाः सम्पद्यन्ते[2]।

अत्र मते पुरुषः परमेश्वर एव, अतिरिक्तपरमेश्वराभ्युपगमे पदार्थाना-मेकत्रिंशत् सङ्ख्या न सङ्गच्छेत।

एतन्मते परमेश्वरस्यैव जीवभावोपगमः। तथाहि, 'मायावशेन स्वरूपस्याच्छादितत्वाद् अल्पज्ञत्वशक्तिरूपयाऽविद्यया सर्वज्ञत्वविपरीतकिञ्च-ज्ज्ञत्वम्, नियत्या नियमितस्य स्वातन्त्र्यहानेन देशकालाद्यधीननियतकर्मफलो-

---

१. अन्तवत्त्वम्. सर्वज्ञता वा। —ब्रह्मसूत्रे, ( २।२।४१ )

२. 'प्रधानम् = मूलप्रकृतिः। महदहङ्कारतन्मात्राणीति सप्त प्रकृतिविकृतयः। पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि। पञ्चविषयाः, मनश्चैकमिति षोडशविकाराः। पुरुषस्तु दृशिस्वभाव इति पञ्चविंशतिसङ्ख्यकः प्रपञ्चो वस्त्विति साङ्ख्याः।''' पाशुपतास्तु, रागाविद्यानियतिकालकलामायाधिकास्त एवैकत्रिंशत् पदार्था इति ब्रुवते।' —गौडपादकृतमाण्डूक्यकारिकाभाष्यस्यानन्दगिरिटीका, ( २।२६ )।

पभोगः, किञ्चित्कर्तृत्वशक्तिरूपया कलया सर्वकर्तृत्वविरीताल्पकर्तृत्वम्, रागेण च नित्यतृप्तस्य तृप्तिराहित्यम्, इत्येवं पशुपतेः = परमेश्वरस्य एव जीवभावसम्पत्तिः। तस्य जीवस्य मोक्षसाधनानुष्ठानेन स्वरूपप्राप्तिरेव मोक्षः। प्रधानस्यैतन्मते मायाकार्यत्वम्, न तु तस्य नित्यता।

ब्रह्मसूत्रशाङ्करभाष्ये[1] द्वैतवादिषु पाशुपतानां गणनात् सम्भवत्यत्रापि द्वैतपक्षपातः[2], तत्र पक्षे परमेश्वरस्य जीवत्वकल्पना नास्ति।

प्रत्यभिज्ञामत इवैतदीयसिद्धान्तेऽपि कालस्य जन्यत्वमङ्गीक्रियते, तस्य च कालस्य मायैवोपदानम्।

कालस्यैतन्मते जीवानां भोगे सहकारिकारणता स्वीकरणीया, जीवस्य स्वरूपतो नित्यतया तस्य स्वतः कालसम्बन्धाभावात्।

## नकुलीशपाशुपतमतम्[3]

ब्रह्मविद्याभरणनामके ब्रह्मसूत्रशाङ्करभाष्यव्याख्याने वेदान्तकल्पतरुपरिमले च नकुलीशपाशुपतमतं संक्षेपेण विवृतं वर्तते। इदञ्च मतं माधवीये सर्वदर्शनसङ्ग्रहेऽपि सङ्गृहीतम्।

एतन्मताश्रिता ग्रन्थाः साम्प्रतं सुदुर्लभाः, केवलं भासर्वज्ञप्रणीता

---

१. (२।२।३७)।

२. अत्र मते यदि सिद्धान्तागमसिद्धान्त इव, योगदर्शन इव च जीवस्य परमेश्वराद्भिन्नत्वं बहुत्वञ्च स्वीक्रियते, तदा परमेश्वरस्य जीवानाञ्चोभयेषामपि पुरुषपदार्थता मन्तव्या। मायादयः षट्पदार्थाः जीवस्य बन्धहेतुत्वेन स्वीकरणीयाः, बन्धापगमे च तस्य शिवसमताऽऽप्तिरूपा मुक्तिः। आनन्दमहोदयेन जीवविषये विशेषानभिधानेन मया यथामति पक्षद्वयं स्वयमूहित्वा प्रदर्शितम्। तत्र युक्तायुक्तत्वनिर्णये सुधिय एव प्रमाणम्।

३. क्वचिदस्य 'लकुलीशपाशुपतेति, क्वचिच्च 'लगुडीशपाशुपते'ति, व्यपदेशो दृश्यते।
—ब्रह्मविद्याऽऽभरणे, (२।२।३७)

'गणकारिका'[१] एवैका रत्नटीकासहिता समुपलभ्यते। आचार्यभासर्वज्ञश्च नैयायिकशिरोभूषणायमानो 'न्यायसार'नामकस्य न्यायनिबन्धनस्य निर्मातेति प्रसिद्धं विदुषाम्।

अत्र सिद्धान्ते कार्य-कारण-योग-विधि-दुःखान्ताः पञ्चैव पदार्थाः[२]। अत एवेदं शास्त्रं 'पञ्चार्थशास्त्रम्' इत्याख्यायते।

तत्र सर्वेषां दुःखानामपोहो दुःखान्तः = मोक्षः[३], स च अनात्मक-सात्मकभेदेन द्विविधः,

(क) सर्वदुःखानामात्यन्तिकी निवृत्तिरनात्मकः,

(ख) दृक्शक्तिक्रियाशक्तिबललक्षणा महैश्वर्यैश्वर्यरूपा सिद्धिस्तु सात्मकः। सेयं सिद्धिर्द्विरूपा,

(क) ज्ञानशक्तिः, (ख) क्रियाशक्तिश्चेति।

ज्ञानशक्तिर्ज्ञानमेव, क्रियाहेतुभूता शक्तिस्तु क्रियाशक्तिः।

अस्वतन्त्रत्वमेव कार्यलक्षणम्।[४] तच्च कार्यं त्रिविधम्,

---

१. Gaekwad's Oriental Series, No. XV, (1920)।

२. नकुलीशपाशुपता मन्यन्ते 'कार्यकारणयोगविधिःदुखान्ताः पञ्च पदार्थाः पशुपाशविमोक्षाय बोद्धव्याः।' —वेदान्तकल्पतरुपरिमलः, (२।२।३७)।
इदमत्रावधेयम्, एतेषां पञ्चानां पदार्थानां स्वरूपाणि गणकारिकारत्नटीकानुसारेणैव प्रदर्श्यन्ते। वेदान्तकल्पतरुप्रभृतिषु शास्त्रान्तरीयग्रन्थेषु निरूप्यमाणान्येतेषां स्वरूपाणि सर्वथा रत्नटीकां नानुसरन्ति। रत्नटीकायामेषां स्वरूपाणि राशीकरभाष्यानुसारेण निरूपितानि। रत्नटीकायामेषां क्रमोऽप्यन्यथा दृश्यते, 'दुःखान्तः कार्यम्, कारणम्, विधिः, योगः' इति। तत्क्रमेणैवात्र संक्षेपेण निरूपणं प्रस्तूयते।

३. साङ्ख्यादिमते आत्यन्तिकदुःखनिवृत्तिरेव मोक्षत्वमङ्गीक्रियते, अत्र मते तु, परमैश्वर्यप्राप्तिरपि मोक्षः। 'तदुक्तम्, शास्त्रान्तरे दुःखनिवृत्तिरेव दुःखान्तः (मोक्षः), इह तु परमैश्वर्यप्राप्तिश्च।' —सर्वदर्शनसङ्ग्रहनकुलीशपाशुपतदर्शनम्।

४. न्यायादिसिद्धान्ते यद् वस्तु पूर्वमविद्यमानं सत् पश्चात् सत्तां लभते तदेव 'कार्यम्' इति व्यपदिश्यते। इह तु नित्योऽपि पशुसञ्ज्ञको जीवःकार्यत्वेन स्वीक्रियते। तदुक्तम्,

(क) विद्या, (ख) कला, (ग) पशुश्चेति ।

तत्र पशुसञ्ज्ञकानां जीवानां गुणो विद्या । सा द्विविधा,

(क) विवेकवृत्तिः, (ख) सामान्यवृत्तिश्चेति ।

तयोर्विवेकवृत्तिः प्रायेणोपदेशव्यङ्ग्या, सा च विद्याशब्देनैव व्यपदिश्यते । सामान्यवृत्तिस्तु प्रमाणमात्रेण व्यङ्ग्या चित्तशब्देन व्यपदिश्यते ।

चेतनपरतन्त्रत्वे सति चेतनरहिता कला । सा द्विविधा,

'कार्य''करण'भेदात् । तत्र कार्यं दशविधम्,

पृथिवी, जलम्, तेजः, वायुः, आकाशम्, गन्धः, रसः, रूपम्, स्पर्शः, शब्दश्चेति ।

करणं पुनस्तत्त्रयोदशविधम्,

पञ्चकर्मेन्द्रियाणि (वाक्, पाणिः, पादः, पायुः, उपस्थञ्चेति) ।

पञ्च ज्ञानेन्द्रियाणि (श्रोत्रम्, त्वक्, चक्षुः, रसनम् घ्राणञ्चेति) ।

अन्तःकरणानि त्रीणि (बुद्धिः, अहङ्कारः, मनश्चेति) च ।

पशुत्वसम्बन्धात् पशुः (जीवः) । स द्विविधः, 'साञ्जन''निरञ्जन'-भेदात् ।

( क ) शरीरेन्द्रियसम्बन्धी साञ्जनः, ( ख ) तद्भिन्नो निरञ्जनः ।

समस्तसृष्टिसंहारानुग्रहकारकं[1] कारणम् ( परमेश्वरः ),

---

'अन्यत्राभूत्वा भावि कार्यम्, इह तु नित्यं पश्वादि ।'

—रत्नटीका ६, सर्वदर्शनसङ्ग्रहनकुलीशपाशुपतदर्शनञ्च ।

अत्र मते, जीवनां नित्यत्वस्वीकारेण, तेषां स्वरूपतो बहुत्वम्, परमेश्वरादतिरिक्तत्वम् चार्थादनुमतम् । तथा च 'एते पाशुपता द्वैतवादिनः' इति सिद्धम् ।

१. शाक्तसिद्धान्तेष्वन्येषु शैवसिद्धान्तेषु च परमेश्वरस्य कृत्यपञ्चकमुपवर्णितम्, सृष्टिः, स्थितिः, संहारः, तिरोधानम्, अनुग्रहश्चेति । अत्र सिद्धान्ते तु सृष्टिसंहारानुग्रहरूप-कृत्यत्रयं प्रतिपादितम् । कृत्यत्रयपक्षे स्थितितिरोधानयोरनुग्रहेऽन्तर्भावः कार्यः ।

तच्च एकमपि गुणक(ध)र्मभेदाद् बहुधा व्यपदिश्यते ।

सर्वत्र गुणक(ध)र्मपुरस्कारेण वाचः प्रवृत्तिर्दृश्यते, गुणादिव्यतिरिक्तो गुणादिविशेषणरहितो भगवान् वाचोऽविषयो 'विशुद्धः' इत्यभिधीयते[1] ।

अयं च भगवान् स्वतन्त्रत्वाद् अचिन्त्यशक्तिमण्डलमण्डितत्त्वाच्च स्वेच्छानुविधायिन्या अव्याहतक्रियाशक्त्या कारणमनमनपेक्ष्यैव सर्वं कार्यजातं सम्पादयति[2] ।

स च परमेश्वर एतन्मते जगतो निमित्तकारणमेव ।

धर्मजनकः साधकव्यापारो विधिः । स द्विविधः,

( क ) प्रधानभूतः, ( ख ) गुणभूतश्च ।

तत्र, प्रधानभूतः साक्षाद् धर्महेतुश्चर्या । सा च त्रिकालभस्मस्नान-भस्मशयन-प्रदक्षिणोपहारादिभेदाद् भिद्यते[3] ।

---

तिरोधानस्य जीवानां भोगसम्पादकतया पर्यवसाने कर्मक्षयेण मोक्षफलकत्वात् । स्थितिरपि भोगानुकूला सती पर्यवसाने मोक्षस्यैवोपकारिका ।

यदि 'कृत्यत्रयमेव कृत्यपञ्चकोपलक्षणम्' इति व्याख्यायते, तदा तत्र प्रमाणं गवेषणीयम् इति सुधियो विभावयन्तु ।

१. 'नित्यानागन्तुकैश्वर्ययुक्ते परमकारणे ।
यत्र वाचो निवर्तन्ते वाग्विशुद्धः स कीर्तितः ॥
क्षणैकमपि यस्तत्र प्राप्नोत्येकाग्रतां यतिः ।
स दग्ध्वा सर्वकर्माणि शिवसायुज्यमाप्नुयात् ॥ —गणकारिकारत्नटीकायाम्, ६ ।

२. 'अन्यत्र शास्त्रे सापेक्षं कारणम्, इह तु निरपेक्षो भगवानेव । अचिन्त्यशक्तिकस्य परमेश्वरस्येच्छानुविधायिन्याऽव्याकृतक्रियाशक्त्या कार्यकारित्वाभ्युपगमात् ।'
—सर्वदर्शनसंग्रहनकुलीशपाशुपतदर्शनम् ।

अन्यत्र शास्त्रे अस्वतन्त्रं प्रधानादि कारणम्, इह तु स्वतन्त्रो भगवानेव ।'
—रत्नटीका, ६ ।

३. 'भस्मना त्रिषवणं स्नायीत भस्मनि शयीत ।' 'हसितगीतनृत्यहुडुक्कारनमस्कारजप्यषडङ्गोपहारेण उपतिष्ठेत ।' इदं नकुलीशभगवता प्रणीतं सूत्रद्वयं सर्वदर्शनसङ्ग्रहे नकुलीशपाशुपतदर्शनप्रस्तावे समुद्धृतम्, तत्र द्वितीयं व्याख्यातं च । अन्यदपि सूत्रद्वयं सर्वदर्शनसङ्ग्रह उद्धृतम्,

चर्याया उपकारको विधिर्गुणविधिः । सोऽपि शास्त्रेऽनेकविधो निरूपितः[१]।
पुरुषस्य चित्तद्वारेण परमेश्वरसम्बन्धो योगः । स द्विविधः,
( क ) क्रियारूपः, ( ख ) क्रियोपरमरूपश्च ।

क्रियारूपो जपध्यानस्मरणादिः, क्रियोपरमस्वरूपश्च स्वशास्त्रप्रसिद्धोऽतिगत्यादिशब्दवाच्यः ।

विधियोगयोः पदार्थयोश्चर्यापदार्थेऽन्तर्भावाद् यद्यपि त्रय एव पदार्थाः पर्यवस्यन्ति, तथापि तयोः पुरुषार्थसाधकतया महाप्रयोजनवत्त्वात् पृथक् प्रदर्शनेन पञ्चपदार्था निर्दिष्टाः[२] ।

अपरे नकुलीशपाशुपतमतानुयायिनः त्रीनेव पदार्थान् समुपगच्छन्ति,

---

'अथातः पशुपतेः पाशुपतयोगविधिं व्याख्यास्यामः' इति प्रथमसूत्रमिति प्रदर्श्य व्याख्यातम् । अपरञ्च सूत्रम् 'अनुस्नानं निर्माल्यलिङ्गधारी' इति ।

हसितादिपदार्थः सर्वदर्शनसंग्रह-दवोन्तकल्पतरु-परिमल-ब्रह्मविद्याऽऽभरणादिषु व्याख्यांताः । स्नानानुस्नानयोर्विशेषः सुस्पष्टतया ब्रह्मविद्याऽऽभरणे प्रतिपादितः, 'भस्मस्नानं द्विविधम्, नित्यं त्रिषवणकर्तव्यं जलस्नानप्रतिनिधिरूपमेकम् । मलमूत्रोत्सर्जनादिषु निमित्तेषु कर्तव्यं जलशुद्धिप्रतिनिधिरूपमनुस्नानमपरम् ।' भस्मशयनेऽपि विशेषस्तत्रोक्तः, 'भस्मशयनं गृहस्थगृहेभ्यो' भिक्षित्वा अन्नवदानीतेन भस्मना कार्यम् ।' इति । इदमत्र बोद्धव्यम्, नकुलीशभगवत्प्रणीतं सूत्ररूपम्, तद्भाष्यञ्च राशीकरविरचितं पूर्वमासीत् । परन्तु अधुना तद् द्वयमपि विलुप्तम् । इदञ्च शास्त्रमतिविस्तृतमासीदिति रत्नटीकान्ते 'अब्धिसमम्' इत्युक्त्या प्रतीयते ।

१. रत्नटीकायाम्, सर्वदर्शनसङ्ग्रहनकुलीशपाशुपतदर्शनप्रस्तावे च प्रपञ्चितोऽपि गुणविधिर्विस्तरभयान्नेह प्रदर्श्यते ।

२. रत्नटीका, ६ इदमत्रावधेयम्, शङ्करभगवत्पादैर्माहेश्वरमते कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्था उक्ताः । ते च पदार्थाः नकुलीशपाशुपतमत एव सङ्गताः । भामत्यादिप्रसिद्धव्याख्यासु मतमिदमन्यथाप्रपञ्चितमपि ब्रह्मविद्याऽऽभरणे नकुलीशपाशुपतमतमेवेदमिति प्रतिपादितम् । वेदान्तकल्पतरुपरिमलेऽपि नकुलीशपाशुपतमतमिदमित्यभिप्रायेण व्याख्यातम् । पूर्वत्र भामत्यादिग्रन्थानुसारेणैव माहेश्वरमतं प्रदर्शितम् ।

( क ) तत्त्वम्, ( ख ) गुणः, ( ग ) भाव इति ।

यत् क्वचिदनाश्रितं तत् 'तत्त्वम्' । तच्च विंशतिप्रकारम्,

पृथिवी, जलम्, तेजः, वायुः, आकाशम् इति पञ्च महाभूतानि, पञ्च कर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि, मनः, बुद्धिः, अहङ्कारः, पशुः (जीवः), कारणं ( परमेश्वरः ) चेति ।

तत्त्वनिष्ठा भावानामाश्रयभूता गुणाः । तत्र, पृथिव्यादिषु यथासम्भवं रूपरसगन्धस्पर्शशब्दाः पञ्च गुणाः । बहिरिन्द्रियेष्वन्तःकरणेषु च गुणा न सन्ति ।

पशुषु सप्तगुणाः सन्ति, पशुत्व-धर्माधर्म-चित्र-विद्या-प्रलयेच्छारूपाः ।

सुखादीनामेतेष्वन्तर्भावात् पृथग् गणना नास्ति । कारणे गुणत्रयम्,

( क ) कामः ( कारणनिरपेक्षस्य स्वेच्छया समस्तकार्यकर्तृत्वरूपः ),

( ख ) ऋषित्वम् ( क्रियाशक्तिः ),

( ग ) विप्रत्वम् ( ज्ञानशक्तिः ) चेति ।

गुणानामेतन्मते धर्मिभ्यो भिन्नाऽभिन्नत्वेनानिर्वचनीयत्वम् ।

'सत्त्वगुणानां धर्मा भावा इत्युच्यते'[1] ।

अत्र, पक्षद्वयेऽपि 'काल'तत्त्वस्य गणनाऽभावेन एतन्मते कश्चित् 'काल'पदार्थः स्वातन्त्र्येण नाङ्गीक्रियते । प्रथमोक्तपक्षे संहारकर्तृत्वरूपं कालत्वं कारणपदार्थस्य परमेश्वरस्याभ्युपगम्यते[2] ।

---

१. रत्नटीका, ६ ।

२. 'अन्तरसृष्ट्यामपि संहारकर्तृत्वं कालत्वम् ।' —रत्नटीका, ६ ।
इदमत्र प्रतिभाति, एतन्मते सृष्टिर्द्विविधा; महासृष्टिः, अन्तरसृष्टिश्चेति । तत्र प्रलयानन्तरं या सृष्टिः पृथिव्यादिपदार्थानां सा महासृष्टिः, महासृष्ट्यां सत्यां घटपदादीनां याऽवान्तरसृष्टिः, सा अन्तरसृष्टिः । तत्र यत्संहारकर्तृत्वं भगवतः तत् कालत्वम् । अपिशब्दात् सर्वसंहारकर्तृत्वरूपं कालत्वमपि परमेश्वरस्यैव । सर्वथा संहारकर्तृत्वमेव कालत्वमिति फलितम् ।

अत्र सिद्धान्ते विधीनां सम्यगनुष्ठानाशक्तेनाऽपि मोक्षोऽधिगन्तुं शक्यते, यदि तेन दीक्षाऽधिगता भवेत् । दीक्षायाः पञ्चाङ्गानि निर्दिष्टानि[1] ।

तत्र, पूर्वाह्णरूपः कालोऽपि दीक्षाङ्गत्वेन निर्दिष्टः[2] ।

तथा च पूर्वाह्णादिकालव्यवहारो नकुलीशपाशुपतानामपि सम्मतः । एवञ्च परमेश्वरस्यैवादित्यगत्याद्युपाधिवशात् कालव्यवहारनिर्वाहकत्वमेतन्मते स्वीकार्यम्, नास्त्यन्यः कश्चन परमेश्वरातिरिक्तः 'काल'पदार्थं इति निष्कर्षः ।

## प्रत्यभिज्ञादर्शनमतम्

आसीत् कश्मीरदेशे शैवागमानुयायिनां दार्शनिकानां सम्प्रदायविशेषः, येषां शास्त्रं 'प्रत्यभिज्ञा' इति व्यवह्रियते । तत्र, सोमानन्दनाथोत्पलाचार्याभिनवगुप्तादयो महान्त आचार्या निबन्धान् रचयाम्बभूवुः ।

अस्ति महार्थमञ्जरी नाम एतत्सिद्धान्तनिरूपणपरो ग्रन्थविशेषः प्राकृतभाषानिबद्धगाथामयः, यत्र संस्कृतभाषामयी व्याख्या परिमलाख्या वर्तते ।

महार्थमञ्जर्यामष्टादशगाथायां महेश्वरस्य मायाविभूतिरूपा जीवभावापादिकाः पञ्च शक्तय उक्ताः,

सर्वंकरः सर्वज्ञः पूर्णो नित्योऽसङ्कुचश्च ।
विपरीत इव महेशो याभिस्ता भवन्ति पञ्चशक्तयः ।।[3]

ताश्च कला, अविद्या, रागः, कालो, नियतिः इत्युच्यन्ते । कला तस्य किञ्चित्कर्तृत्वहेतुः । अविद्या किञ्चिज्ज्ञत्वकारणम् । रागो विषयेष्वभिसङ्गः । कालो भावानामवभासनानवभासनात्मा क्रमः । नियतिः 'ममेदम्' इत्यादिनियमहेतुः ।

---

१. 'द्रव्यं कालः क्रिया मूर्तिर्गुरुश्चैवेह पञ्चमः ।' —गणकारिका, ५ ।

२. 'कालः पूर्वाह्णः' । —रत्नटीका ।

३. सव्वकारो सव्वणो पुणो णिच्चो असङ्कुअन्तो अ ।
विवरीओ त्वमहेसो जाहि ताहोति पंच सतीओ ॥

एतत्पञ्चकं चागमेषु स्वरूपावरकत्वात् 'कञ्चुकम्' इत्युच्यते[1]।

प्रतिपादितञ्चागमेषु आणवमायीयकार्यभेदेन त्रिविधं मतम्, तदेवात्मनो जीवभावापादकत्वाद् बन्ध इत्युच्यते।

तत्र आणवं मलमज्ञानरूपं[2] मायीयञ्च कलादिपृथिव्यन्तं तत्त्वजातम्। कार्मञ्च धर्माधर्मात्मकम्[3] इतीश्वरप्रत्यभिज्ञाविमर्शिन्यामाचार्याभिनवगुप्त-प्रणीतायां[4] स्पष्टम्। तत्र, अज्ञानरूपमाणवमलमेवेतरयोर्मलयोः कारणम्। तत्र, मायीयमलान्तर्भूता कालशक्तिः। महार्थमञ्जरीपरिमले तस्या माया-कार्यत्वेन मायाविभूतिरूपत्वमभिहितम्[5]। माया च परमेश्वरस्य मोहनी शक्तिश्चिदेकरसे तस्मिन् भेदकल्पिका। तदुक्तम्,[6]

'एकरसे स्वभावे उद्भावयन्ती विकल्पशिल्पानि।
मायेति लोकपतेः परमस्वतन्त्रस्य मोहनी शक्तिः ॥'[7]

श्रीमदाचार्याभिनवगुप्तपादैरीश्वरप्रत्यभिज्ञाविमर्शिन्यां कलाऽविद्याकाल-

---

१ उक्तं तत्रैव परिमले, 'तदुक्तं श्रीमत्स्वच्छन्दे,
मलप्रध्वस्तचैतन्यं कलाऽविद्यासमाश्रितम्।
रागेण रञ्जितात्मानं कालेन कलितं तथा ॥
नियत्या यमितं भूयः पुम्भावेनोपबृंहितम्।
प्रधानाशयसम्पन्नं गुणत्रयसमन्वितम् ॥
बुद्धितत्त्वसमासीनमहङ्कारसमावृतम् ॥
मनसा बुद्धिकर्माक्षैस्तन्मात्रैः स्थूलभूतकैः ॥' —१५।१६ पृ०।
( अत्र पृष्ठसङ्ख्या त्रिवेन्द्रम्मुद्रितपुस्तकानुसारेण द्रष्टव्या )।

२. 'मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम्।'
'आज्ञानाद् बध्यते लोकस्ततः सृष्टिश्च संहृतिः।' ( ११ पृ० )।

३. 'धर्माधर्मात्मकं कर्म सुखदुःखादिलक्षणम्।' ( १५ पृ० )।

४. ११-१५ पृष्ठेषु।

५. 'मायाविभूत्यात्मकं कलादिपञ्चकम्।' ( ५० पृ० )।

६. महार्थमञ्जर्यां, १७ गाथायाम्।

७. ( ४५ पृ० )

रागनियतीः पूर्वोक्तस्वरूपा यथायथं निरूप्य एताभिरेव युक्तस्य परमेश्वरस्य मायावशेन अपरप्रभातृत्वापरपर्यायं जीवत्वं समुपपाद्य,

'एते च प्रभातृलग्नतयैव भान्ति, इति तस्यैव शक्तिरूपाः प्रतिप्रमातृभिन्ना एव, कदाचित्तु नटमल्लप्रेक्षादौ अपीश्वरेच्छाया एकीभवेयुरपि' इत्यनेन एतासामानन्त्यं प्रतिजीवं भिन्नत्वम्, क्वचिच्च कतिपयजीवान् प्रत्यभिन्नत्वं प्रतिपाद्येश्वरेच्छातिरेकेणासां स्वरूपमेव नास्तीति प्रत्यपादि,

'नहि एषामीश्वरेच्छातिरिक्तं निजं किमपि जीवितमस्ति ।'[1] इति ।

वस्तुतस्तु, शैवागमसम्मतानि शिवशक्त्यादितत्त्वानि षट्त्रिंशत्सङ्ख्याकानि[2], येषामन्यतमं 'काल'तत्त्वम्, तानि सर्वाणि परमेश्वररूपाण्येव ।' उक्तञ्चैतद्विमर्शिन्याम्,[3] 'परमेश्वरस्य हि परमार्थत एताः शक्तयो यस्तत्त्वग्रामः ।' इति ।

कालकलादीनामीश्वरेच्छातिरिक्तं स्वरूपं नास्तीति निरूपितम् । सा ईश्वरेच्छा का ? इति विशेषजिज्ञासायां क्रियातिरिक्ता सा न भवतीति प्रतिपादितं क्रियेच्छयोरभेदाभिधानेन ईश्वरप्रत्यभिज्ञायाम्[4] उपपादितञ्च, इच्छाया एव क्रियारूपत्वं विमर्शिन्याम्[5] । सा च, इच्छाशक्तिः श्रीमदभिनव-

---

१. ईश्वरप्रत्यभिज्ञाविमर्शिनी, ( ३।१।९ )।

२. 'तानि च यथा—१. शिवः, २. शक्तिः, ३. सदाशिवः, ४. ईश्वरः, ५. शुद्धविद्या, ६. माया, ७. कला, ८. अविद्या, ९. रागः, १०. कालः, ११. नियतिः, १२. पुरुषः, १३. प्रकृतिः, १४. अहङ्कारः १५. बुद्धिः, १६. मनः, १७. श्रोत्रम् १८. त्वक् १९. नेत्रम्, २०. जिह्वा, २१. घ्राणम्, २२. वाक्, २३. पाणिः, २४. पादः, २५. पायुः, २६. उपस्थः, २७. शब्दः, २८. स्पर्शः, २९. रूपम्, ३०. रसः, ३१. गन्धः, ३२. आकाशः, ३३. वायुः, ३४. तेजः, ३५. आपः, ३६. पृथिवी ।'

३. ( ३।१।३ )।

४. इत्थं यदा घटपटाद्याभासजगदात्मना ।
तिष्ठासोरेवमिच्छन्ति हेतुता कर्तृता क्रिया ॥, ( २।२७ )।

५. ( २।१।८ )।

गुप्तपादैरेव शक्तिशक्तिमतोरभेदमभिप्रेत्य[1] 'ईश्वरादभिन्नम्' इत्युक्तं विमर्शिन्याम्[2]। एतेषां मते कालः प्रमातृनिष्ठस्तद्द्वारेण प्रमेये सम्बद्ध्यते,

'कालः क्रममासूत्रयन् प्रमातरि विजृम्भमाणस्तदनुसारेण प्रमेयेऽपि प्रसरति'[3] इति। एषां सिद्धान्ते परमेश्वरस्येच्छाशक्तेरन्तर्गतास्ववान्तरानन्तशक्तिषु प्रधानभूते द्वे शक्ती,

(क) ज्ञानशक्तिः (ख) क्रियाशक्तिश्चेति।

वस्तुतस्तु महेश्वरस्येच्छाशक्तिरेव ज्ञानशक्तिरूपतामापद्य क्रियाशक्तिरूपतां भजते। तत्र क्रियाशक्तेः प्रकाशः सर्वं जगत्। शक्तिद्वारेणञ्च सर्वभासकं ब्रह्मैव।

श्रीमत्सदाशिवोदारप्रारम्भं वसुधान्तकम्।
यदन्तर्भावित तत्त्वानां चक्रं तं संस्तुमः शिवम्॥

इत्यभिनवगुप्तार्यैरीश्वरप्रत्यभिज्ञाभिमर्शिन्यां सर्वेषां पदार्थानां परमेश्वर एव प्रतिमासनप्रतिपादनेन एतेषां परमेश्वरव्यतिरेकेण पृथक् सत्ता नास्तीति सूचितम्। एवञ्च, विश्वान्तर्गततया तस्यापि परमेश्वरात् पृथक् सत्ता निरस्ता।

प्रत्यभिज्ञामतं तावद् आभसवादनाम्ना प्रसिद्धम्। इदञ्च मतमारम्भवाद-परिणामवाद-विवर्तवाद-सङ्घातवादेभ्यो विलक्षणमेवेति बहुदर्शिनो विद्वांसो विजानन्ति।

## पाञ्चरात्रमतम्

पाञ्चरात्रागमान्तर्गतायामहिर्बुध्यसंहितायां ज्ञानस्वरूपस्य ज्ञानगुण-

---

१. शक्तिश्च शक्तिमद्रूपाद् व्यतिरेकं न वाञ्छति।
तादात्म्यमनयोर्नित्यं बह्निदाहिकयोरिव॥—अभिनवगुप्तप्रणीतबोधपञ्चदशिका, ३।

२. (२।४।२)।

३. ईश्वरप्रत्यभिज्ञाविमर्शिनी, (३।१।९)।

कस्य[1] च ब्रह्मणः शक्तचादयोऽन्ये पञ्च गुणाः प्रोक्ताः,

'एते शक्तचादयः पञ्च गुणा ज्ञानस्य कीर्तिताः'[2] ।

पर्यवसाने च, 'ज्ञानमेव परं रूपं ब्रह्मणः परमात्मनः'

इत्यनेन ब्रह्मणो ज्ञानस्वरूपत्वमुपसंहृतम् । शक्तिस्वरूपञ्च,

'जगत्छक्तिभावो यः सा शक्तिः परिकीर्तिता'[3] इति प्रतिपादितम् ।

एषा भगवच्छक्तिरेव 'लक्ष्मीः' इति कीर्त्यते[4] । सा च शक्तिर्भगवतो वस्तुतो न भिद्यते, किन्तु भगवतः स्वरूप एवान्तर्भवन्ति[5] सत्यपि शक्तिशक्तिमतोरभेदे शास्त्रेषु विशेष्यविशेषणभावसमारोपेण तयोर्भेदव्यवहारः कृतः । भगवतः 'अहन्ता' रूपैवेयं शक्तिर्नान्या[6] ।

---

१. 'ज्ञानं नाम गुणं प्राहुः प्रथमं गुणचिन्तकाः ।
स्वरूपं ब्रह्मणस्तश्च गुणश्च परिगीयते ॥ —२।५६-५७ ।

२. ते च शक्त्यादयः शक्त्यैश्वर्यबलवीर्यतेजोरूपाः । —२।५७-६९ ।

३. ( २ अ० ५७ ) ।

४. 'जगत्तया लक्ष्यमाणा सा लक्ष्मीरिति गीयते ।'-( ३।९ ) ।

५. 'आत्मभूता हि सा शक्तिः परस्य ब्रह्मणो हरेः ।
देवी विद्युदिव व्योम्नि क्वचिदुद्द्योतते च सा ॥' ( ५।५ ) ।
अत्र उत्तरार्द्धेनास्याः क्वाचित्क उन्मेषो व्याख्यातः ।
स च उन्मेषः स्पष्टमुक्तस्तत्रैवाहिर्बुध्न्यसंहितायाम्,
'क्रियाख्यो योऽयमुन्मषेः स भूतिपरिवर्तकः ।
लक्ष्मीमयः प्राणरूपो विष्णोः सङ्कल्प उच्यते ॥
स्वातन्त्र्यमूल इच्छात्मा प्रेक्षारूपः क्रियाफलः ।
उन्मेषो यः सुसङ्कल्पः सर्वत्राव्याहतः कृतौ ॥
( ३।२८-३१ ), स्फुरणमेवात्र उन्मेषपदार्थः ।

६. 'योऽसौ नारायणो देवः परमात्मा सनातनः ।
अहंभावात्मिका शक्तिस्तस्य तद्धर्मरूपिणी ॥

सेय भगवच्छक्तिर्द्विविधा,

(क) क्रियाशक्तिः (ख) भूतिशक्तिश्च ।

भूतिशक्तिर्नाम सृष्टिशक्तिः । क्रियाशक्तिरेव भूतिशक्तेः प्रवर्तिका । भगवतः सङ्कल्प एव प्रेक्षणरूपं प्राप्य पश्चात् क्रियारूपतां प्रतिपद्यते ।

'सोऽकामयत बहु स्यां प्रजायेय'[१] इति सृष्टेः पूर्ववर्तिनी भगवदिच्छा सङ्कल्पः । 'स ईक्षत लोकान्नसृजा'[२] इति, 'तदैक्षत बहुस्यां प्रजायेय',[३] इति च सृष्टिप्राक्कालिकं भगवतः स्रष्टव्यविषयपर्यालोचनं प्रेक्षणम् । तदेव परिस्पन्दात्मना परिणतं क्रियारूपतां बिभर्ति । एतदेव पाञ्चरात्रशास्त्रे सुदर्शनमित्युच्यते[४] । एवञ्च एतन्मते इच्छैव जन्यज्ञानरूपेण क्रियारूपेणं च परिणमते । नित्यज्ञानात्मकं विष्णुस्वरूपं तु एतस्माज्जन्यज्ञानादन्यदेवेति मन्तव्यम् ।

प्रकृतिर्गुणानां साम्यावस्था,[५] सा च परिणामिनी[६] पुरुषश्चापरिणामी

---

ताविमावैकधैवोक्तौ भेद्यभेदकभावतः ।
पृथक्त्वेन च शास्त्रेषु जगद्धेतु तयोदितौ ॥—अदिर्बुध्न्यसंहितायाम्, ( ६।१-२ ) ।

१. ( तै. ३. २।९ ) ।

२. ( ऐ. ३. १।१ ) ।

३. ( ६।३.१।२।६ ) ।

४. 'तस्य स्यामितिसङ्कल्पो भावतोऽभावतोऽपि वा ॥
स्वानन्त्याननुयोज्येन रूपेण परिवर्तते ।
यत्तत्प्रेक्षणमित्युक्तं दर्शनं तत् प्रगीयते ॥
वस्तुतः कालतो देशात् तस्य त्वव्याहतिर्हिया ।
पूज्या साऽत्र सुशब्दार्थस्तत् सुदर्शनमीर्यते ॥' ( १७-८ ) ।
'सोऽयं सुदर्शनं नाम सङ्कल्पः स्यन्दनात्मकः ।
विभज्य बहुधारूपं भावे भावेऽवतिष्ठते ॥' ( ३।३९ ) ।

५. अहिर्बुध्न्यसंहिता, ( ७।१, ६।१६ ) ।

६. 'पयोमृदादिवत्तत्र प्रकृतिः परिणामिनी ।' ( अ० सं०, ७।५ ) ।

सन्निधानमात्रेण कारणम्[1] । प्रकृतिपुरुषकालानां त्रयाणां भूतिशक्तिजन्यत्वादेतत्कार्यत्रयभेदेन भूतिशक्तिस्त्रिधा भिद्यते—

'......भूतिः, सा च त्रिधा मता ।
अव्यक्तकालिपुम्भावात्........... ॥'[2]
'पुरुषश्चैव कालश्च गुणाश्चेति त्रिधोच्यते ।
भूतिः शुद्धेतरा विष्णोः........... ॥'[3]

अत्र गुणशब्देन गुणमयी प्रकृतिरभिधीयते । कालस्य द्वे स्वरूपे, (क) नियतिः, (ख) कालश्च ।

नियतेः सूक्ष्मरूपत्वात् सूक्ष्मशब्देन प्रतिपादनं कृतम् । तत्र प्रथमतः प्रद्युम्नाद् नियतिकालगुणानां प्रकृतिभूतः कश्चनावस्थाशब्दवाच्य उत्पद्यते—

'सूक्ष्मकालगुणावस्था सुदर्शनसमीरिता ।
प्रद्युम्नस्य ललाटाच्च भ्रुवोः कर्णादुदीरीता' ॥[4]

त्रिष्वेतेषु प्रथमतो नियतेरुत्पत्तिः,

'कालस्य नियतिर्नाम सूक्ष्मः सर्वनियामकः ।
उदेति प्रथमं शक्तेर्विष्णुसङ्कल्पबोधितः ॥'[5]
ततश्च कलनात्मकस्य कालस्योत्पत्तिः,
'कालस्य' पाचनं रूपं यत्तु तत्फलनात्मकम् ।
उदेति नियतेः सोऽथ कालः सङ्कल्पचोदितः ॥[6]

एवञ्च, कालस्य कलनात्मकत्वकथनेन तस्य नियामकत्वमुक्तम् । स एव कलनात्मकः कालः सूक्ष्मावस्थायां नियतिरुच्यते, अत एव तस्याः

---

१. 'पुमानपरिणामी सन् सन्निधानेन कारणम्' ( अ० सं०, ७।६ ) ।
२. ( ३।२८-२९ )
३. ( ६।८ ) ।
४. ( ६।१२ ) ।
५. ( ६।४६ ) ।
६. ( ६।४९ ) ।

सूक्ष्मशब्देन व्यवहारोऽत्र तन्त्र इति पूर्वमुक्तम् । अनयोर्गुणानाञ्च प्रकृतिभूता काचिदवस्थानाम्नी स्वीकृतेत्युक्तमधस्तात् । सर्व एवैते भूतिशक्तेः परिणतिरूपाः । कालनियतिभ्यां भिन्नस्त्रुटिलवाद्यात्मा व्यावहारिकः कालोऽपि स्वीक्रियते ।

स च व्यावहारिकः कालः प्रकृतेः प्रथमपरिणामभूतस्य महत्तत्त्वस्यान्तर्गतः । तच्च महत्तत्त्व कालबुद्धिप्राणभेदेन त्रिविधम् । तत्र महत्तत्त्वान्तर्गतः कालस्त्रुटिलवादिरूपस्तमःपरिणामविशेषः,

'कालो बुद्धिस्तथा प्राण इति त्रेधा स गीयते ।
तमस्सत्त्वरजोभेदात् तत्तदुन्मेषसञ्ज्ञया ।
कालस्त्रुटिलवाद्यात्मा... ॥'[1]

तथा चायं महत्तत्त्वान्तर्गतः कालो व्यावहारिक इति सुस्पष्टं प्रतीयते । पाञ्चरात्रमतस्य परिणामवादान्तर्गतत्वात् सर्वे पदार्था एतेऽकल्पिता एवेति तत्त्वम् ।

आगमसिद्धान्त-दिव्यसिद्धान्त-तन्त्रसिद्धान्त-तन्त्रान्तरसिद्धान्तभेदेन पाञ्चरात्रागमस्य चतुर्विधत्वेऽपि, तेषां परस्परं विरोधो नास्तीति प्रतिपादितं श्रीमदप्पय्यदीक्षितैर्वेदान्तकल्पतरुपरिमले उत्पत्त्यसम्भवाधिकरणे,[2] तेन पूर्वोक्ते कालविषयके सिद्धान्तेऽपि पाञ्चरात्रसिद्धान्तानां परस्परं विरोधो नास्तीति निश्चेतुं शक्यते ।

## श्रीरामानुजसम्प्रदायमतम्

श्रीरामानुजाचार्यादयो वैष्णवाः श्रीसम्प्रदायनिविष्टाः । एतत्सम्प्रदायानुयायिनां मते त्रिविधं तत्त्वं चिदचिदीश्वरभेदात् । तत्र जीववर्गश्चित्तत्त्वम् । स च जीवोऽणुपरिमाणः प्रतिशरीरं भिन्नः । ईश्वरस्तु सकलजगत्सृष्टिसंहारकर्ता । अचित्तत्त्वं त्रिधा भिद्यते,

---

१. (७९-१०)।
२. (२।२।८)।

(क) शुद्धसत्त्वम्, (ख) मिश्रसत्त्वम्, (ग) सत्त्वशून्यम् चेति[१]।

तत्र, 'सत्त्वशून्यं कालः, अयञ्च प्रकृतिप्राकृतानां परिणामहेतुः कला-काष्ठादिरूपेण परिणतो नित्य ईश्वरस्य क्रीडापरिकरः शरीरञ्च।'[२] 'अतीतादिव्यवहारहेतुः कालः। कालिकेन (सम्बन्धेन) सर्वाधारत्वं तल्लक्षणम्[३]।

'सत्त्वशून्यम्' इत्यस्य 'सत्त्वादिगुणत्रयशून्यम्' इत्यर्थः[४], सत्त्वशब्दस्य रजस्तमसोरुपलक्षणत्वात्। प्रकृतिः प्रधानमव्यक्तम्, प्राकृतानि महत्तत्त्वादीनि व्यक्तानि, एषां परिणामहेतुः कालः, एतेषां परिणामे कालस्यावश्यापेक्षणीयत्वात्। प्रकृतिपुरुषकालास्त्रयोऽपि परमेशितुर्लीलोपकरणानि, तत्र प्रकृति-पुरुषौ सृष्टिस्थितिलयरूपायां परमेश्वरलीलायामुपकरणतां गच्छतो विषयी-भावेन, कालश्च सहकारित्वेन[५]।

कालस्य परमेश्वरशरीरत्वकथनेन तस्य परमेश्वरात् पृथक्सिद्धत्वमुक्तम्। परमेश्वरस्य लीलीविभूतौ कालस्योपयोगः, नित्यविभूतौ कालापेक्षा नास्ति[६]। कालस्य कलाकाष्ठादिरूपेण परिणामित्वेऽपि[७] स्वरूपेणोच्छेदाभावात् प्रकृति-

१. तत्त्वत्रये अचित्प्रकरणम्।

२. तत्त्वत्रये अचित्प्रकरणम्।

३. अनन्तार्यप्रणीतवेदान्तवादावलीसिद्धान्तसिद्धाञ्जनजडपरिच्छेदः।

४. अत एव 'कालो नाम गुणत्रयरहितो जडद्रव्यविशेषः' इत्युक्तं श्रीनिवासदासविरचितायां यतीन्द्रमतदीपिकायाम्।

५. 'एवम्भूतः काल ईश्वरस्य क्रीडापरिकरो भवति, लीलाविभूतावीश्वरः कालाधीन एव कार्यं करोति।'
—यतीन्द्रमतदीपिका, ५

६. 'नित्यविभूतौ कालस्य विद्यमानत्वेऽपि तस्य न स्वातन्त्र्यम्। केचित्तु तत्र कालो नास्तीति वदन्ति।'
—यतीन्द्रमतदीपिका, ५

७. 'कालस्यैकस्यैव क्षणत्रवादिरूपेण परिणामाङ्गीकाराद् विभिन्नव्यवहारोपपत्तिः। क्षणादयः परिणामा अपि सर्वगता एव, एकैकक्षणादिसम्बन्धस्य सर्वपदार्थेषु प्रतीतेः'
'एकेनैव क्षणेनास्य विश्वस्यापि विशेषणात्।
कालवत् तत्क्षणानां च व्यापित्वमवसीयते।
—अनन्ताचार्यप्रणीतसिद्धान्तसिद्धाञ्जनजडपरिच्छेदः।

वत् परिणामिनित्यत्वम् । सार्वत्रिकः काल उभयविभूतावपि नित्य इति श्रीलोकाचार्याणां मतम् । केषाञ्चिदाचार्याणां मते लीलाविभूतौ निमेषादिरूपस्य कालस्योत्पत्तिविनाशवत्त्वादनित्यत्वम्, परमपदे (नित्यविभूतौ) निमेषादिपरिणामविशेषप्रयुक्तोत्पत्त्यादिव्यवहाराभावाद् नित्यः कालः । स च कालः प्रत्यक्षागमाभ्यां[1] सिद्धः ।

केचन श्रीसम्प्रदायाचार्या उभयविभूतौ कालस्यैकत्वेन नित्यत्वमभ्युपगत्यादित्यगत्यादिभिरुपाधिभिरवच्छिन्नस्य तस्य क्षणलवादिव्यवहारविषयतामुररीकुर्वन्ति स्म[2] । एतन्मतमेव श्रीमत्कृष्णपादैस्तत्त्वत्रयविवरणे प्रधानतया निरूपितम् । श्रीलोकाचार्याणामपि हृदयाभिप्रायस्तत्रैवेत्युक्तमधस्तात्[3] ।

## वैष्णवागममतम्

शारदातिलके वैष्णवागमविदां मते द्वात्रिंशत् तत्त्वानि प्रतिपादितानि[4],

---

१. 'केचित्तु, 'षडिन्द्रियवेद्यः, कालः' इत्यप्याहुः ।' —यतीन्द्रमतदीपिका, ५ ।
अयञ्च कालः षडिन्द्रियवेद्यः, घटः सन्निति चाक्षुषप्रतीतेः, सर्वसिद्धत्वात्, तत्र सत्त्वस्य कालसम्बन्धित्वमात्ररूपत्वात् ।
—अनन्तार्यप्रणीतवेदान्तवादावलीसिद्धान्तसिद्धाञ्जनजडपरिच्छेदः ।

२. इदमपि मतमुल्लिखितमनन्ताचार्यप्रणीते वेदान्तवादावलीसिद्धान्तसिद्धाञ्जनजडपरिच्छेदे,
'अयं कालो नित्यो विभुरेक एव, क्षणादिव्यवहारस्तु एकस्याप्युपाधिभेदादुपपद्यते ।' इति ।

३. सर्वमेतत् तत्त्वत्रये श्रीलोकाचार्यनिर्मिते, तद्भाष्ये च श्रीवरवरमुनिप्रणीते द्रष्टव्यम् ।

४. '.... .... .... .... द्वात्रिंशद् वैष्णवानि तु ।' ( ५।८१ ) ।
'जीवप्राणधियश्चित्तं ज्ञानकर्मेन्द्रियाण्यथ ।
तन्मात्राः पञ्चभूतानि हृत्पद्मं तेजसां त्रयम् ॥
वासुदेवादयश्चेति तत्त्वान्येतानि शार्ङ्गिणः ॥ —शारदातिलकम्, ५।८७-८८ ।
'तेजसां त्रयम् = अग्नीन्दुसूर्याः —राघवभट्टटीका ।
वासुदेवादयश्चत्वारस्तत्रैवाष्टमे पटले प्रदर्शिताः,
'वासुदेवं सङ्कर्षणं प्रद्युम्नमनिरुद्धकम् ।' —शारदातिलकम्, ८।३० ।

अत्र मते जीवतत्त्व एव मायाकालकलानियतिविद्यारागाणमन्तर्भावः, एतैर्विशिष्टस्यैव चैतन्यस्यैव जीववस्वीकारात्[1]। एतन्मते, प्रकृतिरपि प्राणतत्त्वेन गतार्थेति पद्मपादाचार्यैरुक्तम्[2]।

तथा च पूर्वंप्रदर्शितशाक्तशैवसिद्धान्तयोः कालस्य यत् स्वरूपमभिहितम्, एतन्मतेऽपि तदेवेति मन्तव्यम्।

## आगममतनिष्कर्षः

पूर्वंप्रदर्शितशाक्तशैववैष्णवसिद्धान्तेषु तन्त्राणां प्रामाण्यस्वीकारात्[3] तत्त्वानां नामसङ्ख्ययोर्भेदेऽपि वस्तुगत्या तावन्त्येव तत्त्वानि समभ्युपगतानि। यथा, शाक्तानां सिद्धान्ते आत्मतत्त्व-विद्यातत्व-शिवतत्त्वरूपेणापि तत्वानां

---

१. 'वैष्णवे तु जीवतत्त्व एवैतत् सर्वमन्तर्भूतम्। —प्रपञ्चसारविवरणम्, १।५९।
'अन्तर्भूतमिति। यदुक्तम्—'तदुपहित एव जीवः' इति।'
—प्रयोगक्रमदीपिका, विवरणव्याख्या।

२. 'वैष्णवे प्राणतत्त्वेनैव गता प्रकृतिः।' —प्रपञ्चसारविवरणम्, १।५९।

३. शाक्तानां सिद्धान्ते तन्त्राणां स्मृतिरूपेण प्रामाण्यमङ्गीकृतम्, तदुक्तं भास्कररायेण सौभाग्यभास्कराभिधे ललितासहस्रनामभाष्ये प्रथमशतकोपक्रमे, 'परमार्थस्तु तन्त्राणां स्मृतित्वाऽविशेषेऽपि मन्वादिस्मृतीनां कर्मकाण्डशेषत्वम्, तन्त्राणां ब्रह्मकाण्डशेषत्वम् इति सिद्धान्तात्। इति। वारिवस्यारहस्यप्रकाशेऽपि,
'तन्त्राणां धर्मशास्त्रेऽन्तर्भावः।' (१।६), इति।
शारदातिलकटीकायां राघवभट्टप्रणीतायामुपक्रमे तन्त्राणां स्मृतित्वेन वेदमूलकतया प्रामाण्यं समर्थितम्।
शैवानां सिद्धान्ते तन्त्राणां श्रुतित्वेन प्रमाण्यमभ्मुपगतमिति श्रीमृगेन्द्रवृत्त्यादि ग्रन्थपरिशीलनेन प्रतीयते। श्रीकण्ठाचार्यकृते ब्रह्मसूत्रशैवविशिष्टाद्वैतभाष्ये शिवागमानां (तन्त्राणाम्) वेदैः सहाऽभेदः प्रतिपादितः, 'वयन्तु वेदशिवागमयोर्भेदं न पश्यामः' इत्युक्त्या। —(२।२।३८)।

विभागे,[1] नान्येषां तत्वानां प्रत्याख्यानम्, किन्तु तत्रैवान्तर्भावः, तथा क्वचित् क्वचिदागमसिद्धान्तेषु तत्त्वानां न्यूनाधिकसङ्ख्याप्रदर्शनेऽपि तत्र तत्र केषाञ्चित् तत्त्वानामन्तर्भावसमाश्रयणेन, क्वचिद्वा बहिर्भावाभ्युपगमेन नामान्तरस्वीकारेण च विरोधाभाव एव। नहि नामभेदेन वस्तुभेदः कस्यचित् प्रेक्षावतः सम्मतः, न वाऽन्तर्भावबहिर्भावाभ्यां वस्तुस्वरूपं लुप्यतेऽतिरिच्यते वा। तस्माद्, आगमिकानां[2] कालविषये सिद्धान्ता आपाततः क्वचिद् विलक्षणतया प्रतीयमाना अपि पर्यवसाने नातीव भिद्यन्ते इति प्रतिभाति।

## द्वैतशाक्तमतम्

### (पारानन्दसूत्रोक्तम्)

परानन्दमुनिविरचिते शाक्तसूत्रे चतुर्विधाः पदार्था निरूपिताः। तथाहि,

(क) केचन पदार्था आद्यन्तविरहिताः,
(ख) केचन सादित्वेऽपि अन्तरहिताः,
(ग) केचिद् अनादयोऽपि सान्ताः,
(घ) अपरे सादयः सान्ताश्च।[3]

तत्र मते, कालस्तावद् आद्यन्तविरहितो,[4] व्यापकश्च[5]। स च कालः क्षणदिनमासवर्षादिरूपेण परिच्छिन्नोऽपि घटादीनां परिच्छेदकः[6]।

---

१. प्रपञ्चसारविवरणम्, (१।६०); परशुरामकल्पसूत्रवृत्तिः, (१।४)।

२. नकुलीशपाशुपतास्तु शैवाअपि नागमिकाः, नकुलीशभगवत्प्रणीसूत्रप्रमाणकत्वात्तदीयसम्प्रदायस्येति विभावनीयम्।

३. 'पदार्थाश्चतुर्विधाः।
'अनाद्यनन्तसाद्यनन्तानादिसान्तसादिसान्ताः।' —पारानन्दसूत्रम्, (५।७)।

४. 'परमात्मेश्वरा जीवा दिक्कालाकाशपरमानन्दलोकाश्चानाद्यनन्ताः।'
—पारानन्दसूत्रम्, (५।७।९७)।

५. 'दिक्कालाकाशाज्ञानाञ्च व्यापकत्वम्।' —पारानन्दसूत्रम्, (५।८।२)।

६. 'कालः परिच्छेदकः परिच्छिन्नश्च।' —पारानन्दसूत्रम्, (५।८।६)।

## प्रपञ्चसारमतम्

आचार्यशङ्करभगवत्पादसङ्कलिते प्रपञ्चसारे, 'प्रकृतिः,' 'पुरुषः,' 'काल'श्चेति त्रयः पदार्था नित्या निरूपिताः[1]।

तत्र प्रकृतिपुरुषकालानां त्रयाणामपि परापरभेदेन द्वैविध्यं व्याख्यातं श्रीपद्मपादाचार्यैः प्रपञ्चसारविवरणे।[2]

परमेश्वरश्चित्स्वरूप एकोऽपि स्वशक्तिकल्पितेन भेदेन 'प्रकृतिः,' 'पुरुषः,' 'काल'श्चेति त्रिरूपतां प्रतिपद्यते।[3]

परमेश्वरः स्वतश्चैतन्यमात्रस्वरूपोऽपि वेदितृदशायामचिदंशविशिष्ट एव, तत्र चिद्रूपांशः परः पुरुषः। प्रथमं तावद् चिद्वस्तुनि अचिदारोपः, ततस्तस्मिन्नचिदर्थे क्वचित्तदाश्रयभूतस्य चिद्वस्तुन आरोपः, स एवापरः पुरुषः, एवञ्च, अचिदंशरूपायां मायायां चित्प्रतिविम्बः स्वरूपतोऽचेतनोऽपि चिदंशानुगमेन चैतन्यमिवापन्नोऽपरपुरुषतामभिपद्यमानो व्यवहारदशायां 'जीवः' इति व्यपदिश्यते।[4]

परा प्रकृतिरपि स्वयं प्रकाशमानं चिद्रूपमेव। तत्र कल्पितं महत्त्वादिनिखिलप्रपञ्चोपादानभूतमचिच्छक्तिमात्रं प्रकृतिपदवाच्यम्। सेयम-

---

१. 'प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम।' —प्रपञ्चसारः, (१।२१)।

२. 'प्रकृतिपुरुषकाला द्विविधाः, परापरभेदेन। 'विचिकीर्षुः' (१।४१), 'स्वसंवेद्यस्वरूपा' (१।२४), या युष्मानपि' (१।२६), 'बहुना किं परपुंसः' (१।९९), 'सा तु कालात्मना' (१।२८), 'लवादिप्रलयान्त-' (२।२९) इत्यादिवाक्यशेषात्।'

—प्रपञ्चसारविवरणम्, (१।२०-२१)।

अत्र 'विचिकीर्षुः' 'या युष्मानपि' 'लवादिप्रलयान्तः' इत्यपरे प्रकृत्यादयः। 'स्वसंवेद्यस्वरूपा' 'वहुना किम्', 'सा तु कालात्मनेति परे।'

—प्रपञ्चसारविवरणव्याख्या प्रयोगक्रमदीपिका, (१।२०–२१)।

३. 'देवतातत्त्वं चिद्रूपमेकमेव। तस्य स्वशक्तिकल्पित एवायं प्रकृतिपुरुषकालात्मको विकल्पः।'

—प्रयोगक्रमदीपिका, (१।२०-२१)।

४. प्रयोगक्रमदीपिका, (१।२६-२७)।

परा प्रकृतिः, तस्या एवापरायाः प्रकृतेरन्तर्गतं स्वप्रेरककालप्रयोज्यमखिल-चेतनांशेषु भेदप्रतीतिजनकमवान्तरशक्तिमात्रं 'मायापदव्यपदेश्यम्' इति माया-प्रकृत्योर्भेद एवैतन्मते। एतदेवापरप्रकृतितत्त्वं परमेश्वरस्येच्छाज्ञानक्रिया-रूपं सत्त्वरजस्तमोरूपञ्च। सेयमपरा प्रकृतिर्महत्तत्त्वादिरूपेण परिणममाना जगदाकारं प्रतिपद्यते[1]।

परकालस्वरूपमपि चिद्रूपमेव। कृत्स्नप्रकृतिसाक्षित्वं प्रकृतेः स्वकार्ये सृष्टयादौ प्रेरणञ्च परकालस्य लक्षणम्[2]। कालस्य प्रकृतिप्रेरकत्वं पुरुषकर्मानु-सारेणेति मन्तव्यम्[3]। अपरकालस्य स्वरूपन्तु, लव-त्रुटि-कला-काष्ठा-मास-वर्षादिरूपम्[4]। एकस्यैव परकालस्योपाधिभेदाद् लवादिव्यवहाराः प्रवर्तन्ते,[5] ते चोपाधयो जडप्रकृतेर्विकारभूताः। अत्रायं निष्कर्षः, प्रपञ्च-सारमते तावद् द्वावेव पदार्थौ,

---

१. प्रपञ्चसारः, प्रपञ्चसारविवरणम्, प्रयोगक्रमदीपिका, (१।४१-४८)।

२. 'सा तु कालात्मना सम्यग्मयैव ज्ञायते सदा।' —प्रपञ्चसारः, (१।२८),
'कालात्मना = ज्ञानात्मना। सम्यक् साक्षितयाऽव्यवधानेन।—प्रपञ्चसारविवरणम्।
'कलयति = प्रकृतिं जानाति, योजयति च पुरुषस्यार्थेष्विति कालः। योजनमेव प्रेरणम्। सम्यग्ज्ञायते इति प्रकृत्यन्तर्गततदीयानेककार्यशक्तिपुरुषनिचयतदीयापूर्वजातज्ञानम-प्युक्तम्। सदेति स्थितौ प्रलयेऽपि तुल्यमेतदित्यर्थः। अत्र च प्रकृतिविषयसर्वज्ञान प्रेरणलक्षणचिद्रूपं कालस्य स्वरूपमित्यपि प्रतिपादितम्।' —प्रयोगक्रमदीपिका।

३. पुरुषकर्मानुसारेण तस्य प्रेरकत्वादित्याह, 'कालेन' इति।
( 'कालेनैवं प्रचोद्यते।', प्रपञ्चसारः, १।१९ )। —प्रपञ्चसारविवरणम्।
'पुरुषकर्मानुसारेण' इत्ययं शब्दविवरणम्। —प्रयोगक्रमदीपिका।

४. 'लवादिप्रलयान्तोऽयं कालः प्रस्तूयते ह्यज।' —प्रपञ्चसारः, (१।१९)।
'एवम्, परकालस्यापि स्वरूपमभिधायाऽपरं कालं प्रस्तौति,' लवेति'।'
—प्रपञ्चसारविवरणम्।

५. मूले 'लवादिप्रलयान्तोऽयम्' इत्यत्र 'अयम्' इति 'कालात्मना' इति प्रकृतस्य ग्रहणम्। अयमेव कालो लवादिप्रलयान्तोऽपि कालो भवतीत्यर्थः। 'अस्य कालस्य ( परकालस्य ) लवादयो विभूतिः इत्यपीहोक्तं भवति। अत एव वक्ष्यति 'काल-पर्वाणि' इति।' —प्रयोगक्रमदीपिका, ( १।२९-४० )।

(क) चिद्रूपम्, (ख) जडश्चेति ।

तत्र 'जड', एव 'अचिद्' इति व्यपदिश्यते । जडश्चायं चिद्रूपस्योपाधिः, अस्यैवोपाधेः सम्बन्धाद् एकस्मिन्नेव चिद्रूपे पृथग् व्यपदेशाः, 'प्रकृतिः,' 'पुरुषः', 'कालः' चेति । तत्र जडप्रकृत्युपाधिकं चिद्रूपं परा प्रकृतिः, तस्या एव जडप्रकृतेरंशविशेषमुपाधिमादाय स्थितं चिद्रूपं परः पुरुषः, कृत्स्नाया एव जडप्रकृतेः सूक्ष्मतमो विशुद्धोंऽशः परकालोपाधिः, तेनोपाधिना विशिष्टं चिद्रूपं परः कालः[1] ।

अचिदेवापरा प्रकृतिः, सा च जगदुपादानभूता । तस्या एवांशभूतायां मायायां चित्प्रतिविम्बपरः पुरुषः, स एव जीव इत्याख्यायते । प्रकृतिपरिणामविशेषैरविच्छिन्नं चिद्रूपमेव लवादिरूपोऽपरः काल इति ।

अत्र मते, चिदचितोरुभयोरनादित्वेऽपि चिद्रूपे वस्तुनि अचितः (जडस्य) आरोपस्वीकारादद्वैते पर्यंवसानम् ।

## मनुसंहितामतम्

मनुसंहितायां प्रथमाध्याये सृष्टिप्रकरणे, 'कालं कालविभक्तीश्च नक्षत्राणि ग्रहास्तथा'[2] इत्यनेन कालस्य कालावयवानाञ्च सृष्टिरुक्ता । अत्र प्रथमतः 'कालम्' इत्येकवचनेनैकस्य सामान्यकालस्य सृष्टिरुक्ता, तदनन्तरं खण्डकालानां व्यवहारिककालरूपाणां सृष्टिरभिहितेति प्रतीयते ।

मनुसंहिताव्याख्यासु[3] मनुसम्मतस्य कालतत्त्वस्य विवेचने मतभेदाः परिलक्ष्यन्ते,

---

'लव-त्रुटि-कला-काष्ठा-निमेष-मात्रा-नाडिका-मुहूर्त्ताहोरात्र-मास-सम्वत्सर-युग-कल्प-महाकल्प-परार्ध-कालपर्वाणि'—प्रपञ्चसारविवरणम्, द्वितीयव्याख्या,( १।२८ )

१. प्रयोगक्रमदीपिका, ( १।२८ )।

२. ( १।२४ )।

३. द्रव्यात्मा कालो वैशेषिकाणाम्, क्रियारूपोऽन्येषामादित्यादिगतिप्रतान आवृत्तिमान् ।

मेधातिथि-कूल्लूक-राघवानन्द-नन्दनैः सूर्यादिगतिसमूहस्यैव सामान्यतः कालस्वरूपता स्वीकृता। तथा च, तेषां पूर्वप्रदर्शितज्योतिःशास्त्रसिद्धान्त एव कालविषये सम्मत इति प्रतीयते।

सर्वज्ञनारायणेन च सामान्यकालस्य पुरुषविशेषरूपत्वमङ्गीकृत्य चेतन-रूपता प्रतिपादिता, 'कालविभक्ति'पदेन च क्षण-दिन-मास-वर्ष-कल्पाद्यभि-मानिदेवताः परीगृहीताः।

रामचन्द्रेण च तृतीयं प्रकारं समाश्रित्य सामान्यकालस्य सम्वत्सर-रूपत्वम्, कालविभागानाञ्च सम्वत्सरान्तर्गतत्वंयनादिरूपत्वं वर्णितम्।

रामचन्द्रीयव्याख्यानम् ऋक्संहितामतमनुकरोतीति व्यक्तं विपश्चिताम्। सर्वथा मनुसंहितामते कालस्योत्पत्तिमत्त्वेन अनित्यत्वं पर्यवसन्नम्।

## महाभारतमतम्

महाभारते[1] सृष्टिप्रक्रिया क्वचिद् आकाशादिकाऽद्वैतब्रह्मवादिसम्मता प्रदर्शिता। यथा, शान्तिपर्वणि मोक्षधर्मे मनुबृहस्पतिसम्वादे——

---

कालविभक्तयो विभागा मासत्वंयनसम्वत्सराद्याः'। —मेधातिथिः।

कालम् = सामान्यकालात्मानं पुरुषम्, कालभिक्तीः = कालविभागकल्पाद्यमिमानि-देवताः। —सर्वज्ञनारायणः।

'अत्र 'ससर्ज' इत्युत्तरश्लोकवर्तिनी क्रिया सम्बद्ध्यते। आदित्यादिक्रियाप्रचयरूपं कालम्, कालविभक्तीः = मासत्वंयनाद्याः। —कुल्लूकः।

'कालम् = आदित्याक्रियाप्रचयम्। कालविभक्तीः = मासत्वंयनाद्याः। —राघवानन्दः।

'चन्द्रादित्याश्विन्यादिग्रहनक्षत्रपरिस्पन्दः सामान्यलक्षणः कालः। कालविभक्तिः = लुटिलवादिरवयवः। —नन्दनः।

पूर्वं कालम् = कालात्मकसम्वत्सररूपमसृजत्।
····कालस्य विभागांश्च षड्तून् अयनादींश्च····। —रामचन्द्रः।

१. सर्वमत्र 'बङ्गवासी' मुद्रितबङ्गाक्षरमयपुस्तकादुद्धृतम्।

'अक्षरात् खम्, ततो वायुः, ततो ज्योतिः, ततो जलम् ।
जलात् प्रसूता जगती, जगत्यां जायते जगत् ।।'[१] इति ।

पुनस्तत्रैव याज्ञवल्क्यजनकसम्वादेऽन्यत्राध्याये साङ्ख्यसम्मता सृष्टि-प्रलयक्रिया प्रपञ्चिता ।

तत्रायं विशेषः, निरीश्वरसाङ्ख्यनये स्वतन्त्रैव प्रकृतिर्महदादिरूपेण परिणमते । सेश्वरसाङ्ख्यनये तु, ईश्वरपरतन्त्रा । तत्रैव च प्रकृतौ सर्वेषां लयः, अत्र ब्रह्मण्येव लयः प्रतिपादितः ।

'ततः समभवत् सर्वमक्षयाव्ययमव्रणम् ।
भूतभव्यमविष्याणां स्रष्टारमनघं तथा ।।'[२]

अत्र क्षयः = अपचयः, व्ययः = नाशः, व्रणः = परिणामः, तै रहितम्, अनघम् = मायादोषास्पर्शिनम्' इति नीलकण्ठव्याख्यानदर्शनेन सर्वेषां पर्यवसाने ब्रह्मण्येव लयो दर्शित इति प्रतिभाति ।

साङ्ख्यमते, पुरुषसञ्ज्ञका जीवा भिन्ना इति स्थितिः । अत्र तु एकस्यैव नानारूपतया जीवमभिहितं याज्ञवल्क्येन,

'अव्यक्तरूपो भगवाञ्छतधा च सहस्रधा ।
शतधा सहस्रधा चैव तथा शतसहस्रधा ।।
कोटिशश्च करोत्येष प्रत्यगात्मानमात्मना ।[३]
अचेतना चैव मता प्रकृतिश्चापि पार्थिव ।
एतेनाधिष्ठिता चैव सृजते संहरत्यपि ।।'[४]

अत एवेत उत्तरं जनकप्रश्न उपद्यते,

---

१. (२०२।१), इयमेव सृष्टिप्रक्रिया तैत्तिरीयोपनिषदि समाम्नाता, ( २।१ ) ।
२. ३१२।१६ ।
३. ३१४।२-३ ।
४. ३१४।१२ ।

जनक उवाच

अनादिनिधनावेताावुभावेव महामते ।
अमूर्तिमन्तावचलावप्रकम्प्यगुणागुणौ ॥
अग्राह्यावृषिशार्दूल कथमेको ह्यचेतनः ।
चेतनावांस्तथा चैकः 'क्षेत्रज्ञ' इति भाषितः ॥[1] इति

पूर्वत्र[2] अत्र च सृष्टिप्रक्रियायां कालस्य चर्चैव नास्ति ।

आनुशासनिके पर्वणि प्रथमाध्याये गौतमी-लुब्धक-व्याल-मृत्यु-काल-सम्वादे सर्पदष्टस्य गौतमीपुत्रस्य मरणे कारणविचारणायां सर्पेण भाषितम्,

कोऽन्वर्जुनक दोषोऽत्र विद्यते मम वालिश ।
अस्वतन्त्रं हि मां मृत्युर्विवशं यदचूचुदत् ॥[3] इति

तत्र मृत्युनाऽऽगत्योक्तम्,

प्रचोदितोऽहं कालेन पन्नग त्वामचूचुदम् ॥[4] इति ।
या काचिदेव चेष्टा स्यात् सर्वाः कालप्रचोदिताः ॥[5] इति च ।

ततस्तत्र समागत्य कालेनैतद् भाषितम्,

यदनेन कृतं कर्म तेनायं निधनं गतः ।
विनाहेतुः कर्मास्य सर्वे कर्मवशा वयम् ॥[6] इति ।

पूर्वदर्शिते श्लोके 'कालेन = ईश्वरेण' इति नीलकण्ठेन व्याख्यातम् । शान्तिपर्वणि मोक्षधर्मे व्यासशुकसम्वादे लयक्रमः प्रतिपादितः ।[7] तत्र पृथिव्या जले, जलस्य तेजसि, तेजसो वायौ, वायोराकाशे, नभसो मनसि, मनसश्चन्द्रमसि, चन्द्रमसः सङ्कल्पे, सङ्कल्पस्य विज्ञाने, विज्ञानस्य काले, कालस्य बले, बलस्य काले, कालस्य च विद्यायां लयं प्रतिपाद्य, विलयानन्तरं

१. ३१४।१३,१४ ।
२. २०२।१ ।
३. आनु०, १।३५ ।
४. आनु०, १।५० ।
५. आनु० १।६७ ।
६. आनु० १।७२ ।
७. शान्ति० मोक्ष० २३२ अ० ।

नादस्य ब्रह्मणि लयोऽभिहितः, भूतानां लयस्तु स्वीयगन्धादिगुणलयपूर्वकः इत्यादि निरूपितम् ।

'एष च लय आध्यात्मिकः' इत्युपक्रमे प्रतिपाद्य, योगिनां दृष्ट्या सिद्ध इति पर्यवसान उपसंहृतम् ।

कालस्य बले लयमुक्त्वा, पुनर्बलस्य काले लय इत्थमुक्तः,

'कालो गिरति विज्ञानं कालं बलमिति श्रुतिः ।
बलं कालो ग्रसति तु तं विद्या कुरुते वशे ॥'[१] इति ।

अत्र नीलकण्ठेन 'कालमपि बलाख्या शक्तिर्ग्रसति' इति व्याख्या, 'बलं कालो ग्रसति तु' इतीममंशमन्यथा योजितम्,

'कालं बलं न ग्रसति, किन्तु काल एव बलं ग्रसति इति, तदनन्तरम्, 'तं विद्या कुरुते वशे' इत्यनेन 'कालस्यैव विद्यायां लयः' इति प्रत्यपादि ।

अस्य लयस्य योगिदृष्ट्याऽभिधानेन एतदीयं तत्त्वं योगरहस्यवेदितार एव वेदितुमर्हन्तीति नात्राधिकं वक्तुं प्रवर्ते ।

अत्रेदं प्रतिभाति, महाभारते साङ्ख्यप्रक्रियासम्मतैव सृष्टिर्व्यासदेवस्याभिमता । यत्रापि गगनादिका सृष्टिरभिहिता, तत्रापि 'गुणोपसंहार'न्यायेन महदादिकैव सृष्टिर्मन्तव्या, परन्तु जगतो ब्रह्मण्येव उत्पत्तिक्रमव्युत्क्रमेण लयप्रतिपादनेन एकस्य चानेकजीवभावोपवर्णनेनाद्वैत एव पर्यवसानम् । कालस्य सृष्ट्यनभिधानादतिरिक्तः कालोऽत्र नाङ्गीक्रियत इति ।

## पौराणिकमतम्

पौराणिकमतमपि मानसोल्लासे[२] विवृतं वर्तते । तत्र मते त्रिंशत्पदार्था अभ्युपगम्यन्ते । ते च महीसलिलतेजोवाय्वाकाशानि पञ्चमहाभूतानि; प्राणः, अपानः, समानः, उदानः व्यानश्चेति पञ्चप्राणाः, मनः, बुद्धिः,

१. २३२।१६ ।
२. २।४१ ।

अहङ्कारः, चित्तञ्चेति चत्वार्यन्तःकरणानि, पञ्च ज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि इत्येवं चतुर्विंशतिस्तत्त्वानि पूर्वोक्तानि; महान्, कालः, प्रधानम्, माया, अविद्या, पुरुषः,[1] इत्यपरे षट् ।

एतेषां सङ्कलनया त्रिंशत्सङ्ख्या सम्पद्यते ।

एतदीयसिद्धान्तसिद्धस्य कालस्य परमात्मनश्चेष्टारूपत्वमङ्गीक्रियत इति रामतीर्थीयात् सिद्धान्तभूतव्याख्यानादवसीयते ।

परमेश्वरस्तु पौराणिकसिद्धान्तेऽभ्युपगतः, तस्य चेष्टायाः कालत्वस्वीकारात्, तदीयांशस्य पुरुषपदवाच्यजीवत्वाभ्युपगमाच्च । परन्तु स परमेश्वरः पदार्थकोटौ न गणितः, सर्वेभ्योऽपि पदार्थेभ्यस्तस्य परमसूक्ष्मरूपत्वाद् इति विभावनीयं सूक्ष्मधियाम् ।

## विष्णुपुराणमतम्

विष्णुपुराणे तु विवर्तवाद एव निरूपितः । विवर्तो नाम—'एकस्यैव अद्वितीयस्य भ्रान्त्या नानारूपेण प्रतिभासनम् ।' तदुक्तम्,

'ज्ञानस्वरूपमत्यन्यनिर्मलं परमार्थतः ।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥'[2] इति ।

एकस्यैव ब्रह्मणो व्यक्ताव्यक्तपुरुषकालरूपेण स्थितिरुपवर्णिता,

'तदेव सर्वमेवैतद् व्यक्ताव्यक्तस्वरूववत् ।
तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥'[3] इति

---

१. महान् प्रकृतेराद्यो विकारः, काल ईश्वरस्य चेष्टा । प्रधानं मूलप्रकृतिः । स्वाश्रयम्-व्यामोहयन्ती कर्तुरिच्छानुसरन्ती माया, तद्विपरीता त्वविद्येति भेदः । पुरुषः परमात्मनोंऽशः । —वृत्तान्तव्याख्या. ( २।४३ ) ।

२. विष्णुपुराणे प्रथमांशे, ( २।६ ) । इदं पद्यं श्रीभाष्यप्रथमाधिकरणे श्रीरामानुजाचार्यैरन्यथा व्याख्यातम्, तत्राक्षरस्वारस्यं चिन्त्यम् ।

३. प्र० अं०, ( २।१४ ) ।

'व्यक्तम् = महदादि, अव्यक्तम् = प्रधानम्' इति श्रीधरस्वामिव्याख्या।

पुनरपि स्वसिद्धान्तस्यदाढर्याय कालस्वरूपं व्यापकस्य ब्रह्मण एव रूपमिति प्रतिपादितम्,

'कालस्वरूपं रूपं तद् विष्णोर्मैत्रेय वर्तते।'[1] इति

प्रलये व्यक्तं महदादि स्वीयेन स्थूलरूपेण नासीत्, आदित्यादिगत्युपलक्षितः स्थूलः कालश्च नासीत्। तत्र प्रकृतिपुरुषौ, तयोश्च वियोजकः काल आसीत्। सर्गकाले तु कालेन प्रकृतिपुरुषयोः संयोजनाद् भवति सृष्टिः, तत्र च ब्रह्मैव मूलकारणम्। तस्यैव रूपत्रयम्, 'प्रकृतिः', 'पुरुषः', 'कालश्चे'ति। तत्र प्रकृतिपुरुषयोर्नियामकः कालः। तेन संयोजनवियोजनाभ्यां निमन्त्रितौ प्रकृतिपुरुषौ सृष्टिप्रलययोर्वर्तेते इति। अयञ्च कालो नित्यः, सृष्टिप्रलययोर्विद्यमानत्वात्, सृष्टिस्थितिप्रलयानां कारणञ्च[2]।

स एष आदित्यादिपरिस्पन्दोपलक्षितो व्यवहारविषयः स्थूलः काल इत्युपवर्ण्यते।

सर्वमिदं विष्णुपुराणे प्रथमांशे द्वितीयाध्याये श्रीपराशरेणोक्तं मैत्रेयं प्रति, स्पष्टीकृतञ्च श्रीश्रीधरस्वामिपादैः।

## श्रीभागवतमतम्

श्रीभागवते तृतीयस्कन्धेऽष्टमाध्यायमारभ्य सृष्टिप्रक्रियोपवर्णिता,

'भगवतः कालाख्या शक्तिः प्रलये सुप्तेव लीना तिष्ठति, भाविसर्गोपक्रमे सा परमेश्वरेण प्रेरिता प्रबोधिता भवतीति श्रीधरस्वामिनां सम्मतम्। तथा च, एतन्मते कालाख्या ब्रह्मशक्तिर्नित्या। तथा चोक्तं श्रीभागवते,

---

१. प्र० अं०, (२।२७)।

२. अनादिर्भगवान् कालो नान्तोऽस्य द्विज उच्यते।
अव्युच्छिन्नास्ततस्त्वेते सृष्टिस्थित्यन्तसंयमाः॥ —विष्णुपुराणे प्र० अं०, (२।२६)।
अव्युच्छिन्नाः = प्रवाहरूपेणाऽविरताः। —श्रीधरस्वामी।

'सोऽन्तः शरीरेऽर्पितभूतसूक्ष्मः
कालात्मिकां शक्तिमुदीरयाणः ।
उवास तस्मिन् सलिले पदे स्वे
यथाऽनलो दारुणि रुद्धवीर्यः ।।'[१]

अत्र श्रीधरस्वामिभिरुक्तम्,

'कालशक्तेः प्रेरणं पुनः सृष्ट्यवसरे प्रबोधनार्थम् ।' इति ।

श्रीमाध्वमतानुयायिनस्तु कालस्यानित्यतामङ्गीकुर्वन्तः, 'कालात्मिकाम् = कालाख्याम्, सहकारिशक्तिमुदीरयाणो जनयन्' इत्यर्थमाहुः[२] तेषान्तु, 'उदीरयाणः' इत्यक्षरास्वारस्यं स्पष्टम् । नहि, ईरधातोरुत्पत्त्यर्थकत्वं वैयाकरणानां निकाये प्रसिद्धम् । यथा तथा वास्तु, 'कालाख्या ब्रह्मणः शक्तिर्ब्रह्मणः सहकारिणी' इत्यत्राविवाद एव ।

'विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया ।
ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना ।।'[३]

'विष्णुमायया संस्थितम् = संहृतम्, ब्रह्मतन्मात्रं सद् विश्वम् ईश्वरेण कर्त्रा, कालेन निमित्तेन, परिच्छिन्नम् = पृथक् प्रकाशितम् । अव्यक्ता मूर्तिः = स्वरूपं यस्येति स्वतो निर्विशेषता दर्शिता' इति श्रीधरस्वामिव्याख्या ।

कालः सूक्ष्मस्थूलभेदेन द्विविधः, स चानुमानगम्यः, सर्वेषां व्यक्तापराभिधेयानां कार्याणां व्यापकः,

'एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तम ।
संस्थानभुक्त्या भगवान् अव्यक्तो व्यक्तभुग् विभुः ।।'[४]

संस्थानम् = परमाण्वाद्यवस्था, तस्य भुक्तिः = व्याप्तिः, तया भगवान् इति हरेः शक्तिः ( शक्तिशक्तिमतोरभेद इत्यभिप्रायः ) । स्वतोऽव्यक्तः व्यक्तं ( कार्यजातम् ) व्याप्नोति परिच्छिनत्ति' इति श्रीधरीयव्याख्या ।

---

१. ३।८।११ ।
२. सुधायां वैशेषिकाधिकरणे ।
३. भा०, ३।१०।१२ ।
४. ३।११।३ ।

एतदेव प्रपञ्चितमग्रिमे श्लोके,

'स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् ।
स्वंतोऽविशेषभुग् यस्तु स कालः परमो महान् ।।'[१]

श्रीधरस्वामिभिरस्य पद्यस्यायमभिप्रायः स्पष्टीकृतः, 'ग्रहर्क्षताराचक्रस्थ'[२] इत्यादिना यत्सूर्यपर्यटनं वक्ष्यते, तत्र सूर्यो यावता परमाणुदेशमतिक्रामति, तावान् कालः परमाणुः, यावता च द्वादशराश्यात्मकं भुवनकोशमतिक्रामति स परममहान् सम्वत्सरात्मकः कालः, तस्यैवावृत्त्या युगमन्वन्तरादिक्रमेण द्विपरार्धान्तत्वम् इति । तथा च पञ्चमे[३] सूर्यगत्यैव कालादिविभागं वक्ष्यति ।' इति

एवञ्च, एकस्या एव कालशक्तेरादित्यगतिरूपोपाधिवशेन सम्वत्सरादि-कालव्यवहारनिर्वाहकत्वमुक्तम् ।

## योगवाशिष्ठमतम्

योगवाशिष्ठरामायणस्योत्पत्तिप्रकरणे द्वादशे सर्गे सृष्टिप्रक्रिया विस्तरेणोपवर्णिता समुपलभ्यते । तत्र प्रथमतः सृज्यमानवस्तुविषयम् आक्षणम् उपवर्ण्य ईक्षणवृत्तिविशिष्टाया ब्रह्मसत्तायाः परमेश्वरभावमीक्षणावृत्तिविषयीभूताया-स्तस्या एव सत्ताया हिरण्यगर्भात्मकजीवभावञ्चाभिधाय हिरण्यगर्भद्वारैव वियदादिसृष्टिः प्रपञ्चिता । तत्र च, आदावाकाशसृष्टिस्ततो युगपदहङ्कार-कालयोः सृष्टिरभिहिता,

'समनन्तरमेवास्याः खसत्तोदेति शून्यता ।
शब्दादिगुणबीजं सा भविष्यदभिधार्थदा ।।
अहन्तोदेति तदनु सह वै कालसत्तया ।।'[४]

व्याख्यातञ्च वासिष्ठतात्पर्यप्रकाशे,

इदानीं महाभूतसर्गं विवक्षुः प्रथममाकाशसर्गमाह 'समन्तरम्' इति ।

---

१. ३।११।४।
२. भा०, ३।११।१३।
३. २१ अ०।
४. ९–१०।

अस्या जीवसत्तायाः समनन्तरमेव खसत्ता इतरभूतावकाशदत्वाच्छून्यताप्राया उदेति । सूर्यादिसर्गोत्तरं भविष्यन्तीनामाकाशाद्यभिधानाम्, आ = समन्तात्, काशते = प्रकाशते इत्याद्यर्थंदा ।

तत्र प्रागुक्तजीवस्याहन्ताभिमानं तदाप्रभृति द्विपरार्धपरिमिततदायुःकालक्लृप्तिं चाह 'अहन्तेति' । इयमाकाशाहङ्कारकालसृष्टिर्न हिरण्यगर्भादेव, किन्तु तद्वेषोपहितपरमात्मसत्ताया एव, तस्या एव सर्वकारणत्वात् ।[1]

योगवसिष्ठरामायणे विवर्तवाद एव सिद्धान्तितः[2] ।

श्रीशङ्करभगवत्पादसिद्धान्तादत्रायं विशेषः,

'तैराकाशादिवत् कालाख्यः कश्चिद् व्यावहारिकोऽपि पदार्थो नाङ्गीकृतः, तन्मते कालपदार्थस्याविद्यायामेवान्तर्भावात् । 'आकाशसृष्टचनन्तरं वायुसृष्टिः' इति शाङ्करसिद्धान्तमर्यादा ।

योगवसिष्ठमते तु, आकाशसृष्टेरनन्तरमहङ्कारकालयोः सृष्टिः । तथा च योगवसिष्ठमते 'कालस्योत्पत्तिमत्त्वादेव विनाशित्वम्, उपाधिभेदेन चैकस्यैव क्षणदिनमासवर्षादिव्यवहारविषयत्वं सिद्धम् ।

कालस्य प्रत्यक्षत्वाप्रत्यक्षत्वविचारस्तु योगवासिष्ठे न कृत इति तद्विषयकमेतदीयं मतं विशिष्य किमपि वक्तुमशक्यम् ।

## सूतसंहितामतम्

स्कन्दपुराणान्तर्गतसूतसंहितायां कालतत्त्वम्, कालस्य द्वैविध्यञ्च निरूपितम्,

---

१. वासिष्ठतात्पर्यप्रकाशे द्वादशश्लोकव्याख्यायाम् ।

२. यस्माद् घटपटाकारपदार्थशतपङ्क्तयः ।
तरङ्गगणकल्लोलवीचयो वारिधेरिव ॥
स एवान्यतयोदेति यत्पदार्थशतभ्रमैः ।
कटकाङ्गदकेयूरनूपुरैरिव काञ्चनम् ॥ —यो० वा०, उत्पत्तिप्र०, (९६९-७०) ।
अत्र भ्रमशब्दप्रयोगेण पदार्थानां विवर्तरूपता प्रतिपादिता ।

'द्विविधो हि कालः परमोऽपरमश्चेति'[१] ।

(क) शिवमायासम्बन्धरूपः परमः कालः[२] ।

(ख) स एव परमः कालः कल्प-मन्वन्तर-सम्वत्सर-मासाद्यात्मना पदार्थान् परिच्छिन्दन्नपरमः काल इत्युच्यते ।

अयं कालोऽनादिरपि मायाकल्पितत्वाद् मायाधीननिरूपणत्वाच्च 'माययोदितः' इत्युक्तः[३] । नित्यश्चिदानन्दरूपः परमात्मा यथा कालेन नावच्छिद्यते, तथा कालोऽपि न कालेनावच्छिद्यते[४] । यथा शिवे परमात्मनि कल्पितत्त्वाद् मायाया असत्यत्वम्, तथा कालस्यापि कल्पितत्वादसत्यत्वम्, सर्वे कालपरिच्छेदयोग्याः पदार्थाः काले लीयन्ते, मायाकालावुभावपि शिवे लीयेते[५] । तथा च, अद्वैते पर्यवसानम् ।

## बौद्धमतम्

बौद्धमतानुयायिनश्चतुर्धा भिद्यन्ते,

(क) सौत्रान्तिकाः, (ख) वैभाषिकाः, (ग) योगाचाराः, (घ) माध्यमिकाश्चेति । सौत्रान्तिकास्तावत्, 'सन्ति बाह्यार्थास्ते च न प्रत्यक्षगोचराः किन्तु विज्ञानवैचित्र्येणानुमीयन्ते' इति मन्यन्ते ।

---

१. 'अनया (मायया) देवदेवस्य शिवस्य परमात्मनः ।
उचितः परमः कालस्तद्वशाः सर्वजन्तवः ॥'
—सूतसंहिताशिवमाहात्म्यखण्डम्, (८।२२), माधवाचार्यव्याख्या च ।

२. 'कालो मायात्मसम्बन्धः सर्वसाधारणात्मकः ।' —सूतसंहितोत्तरखण्डे । अत्र मते चित्स्वरूपे शिवे माया कल्पिता । प्रतिपादितञ्चैतद् माधवाचार्यकृतायां सूतसंहिताशिवमाहात्म्यखण्डतात्पर्यदीपिकायाम् ।

३. सूतसंहिताशिवमाहात्म्यम्, (८।२२-२३) ।

४. ,, ,, ,,

५. ,, ,, ,, (८।२३,२४) ।

वैभाषिकास्तु, बाह्यपदार्थसत्त्वमभ्युपगत्यापि सर्वेषामनुमानगम्यत्वं न सहन्ते, किन्तु यथाप्रमाणं केचन परमाण्वादयोऽनुमेयाः, अपरे घटादयश्च प्रत्यक्षविषया इति वर्णयन्ति[1]।

सौत्रान्तिकवैभाषिकयोः परोक्षत्वापरोक्षत्वाभ्यां बाह्यार्थवैलक्षण्ये सत्यपि बाह्यार्थाभ्युपगन्तृत्वेन[2] तुल्यत्वं विद्यत्वे, अत एव, 'सर्वास्तिवादी' इति नाम्ना शास्त्रेषु व्यवहारो दृश्यते।

'सौत्रान्तिका''वैभाषिका' श्चोभयेऽपि पुञ्जवादिन इत्युच्यन्ते।

'परमाणव एव द्व्यणुकादिभूतभौतिकपर्यन्तबाह्यसमुदायरूपेण संहन्यन्ते, नाऽत्रयविनमारभन्ते[3]। यथा तार्किकमते परमाण्वादिभिर्द्व्यणुकादिक्रमेण कार्यमारभ्यते, नैवं बौद्धमते; अपि तु, परमाणुसमुदाय एव गिरिनद्यादिकं सर्वम्[4]।

घटादीनां परमाणुसमुदायरूपत्वे प्रत्येकं परमाणुषु महत्त्वाभावेन, तत्र स्थौल्यापरपर्यायं महत्त्वं कथं प्रतीयत इति नाशङ्कनीयम्, यतः प्रतिमासं-दशापन्नानां तेषां भविष्यति बहुत्वादिवत् साम्वृतं स्थौल्यम्[5]।

न च, अदृश्यसमुदायस्यादृश्यतानियमः, अप्रयोजकत्वात्। एकैकस्य तन्तोः स्यन्दनाकर्षणशक्त्यभावेऽपि तत्समुदायस्य तदाकर्षणशक्तिवदेकैकस्य परमाणोरदृश्यत्वेऽपि तत्समुदायस्य दृश्यतोपपत्तेः। यदाहुः,

'प्रत्येकं दृष्ट्ययोग्यत्वेऽप्यणूनां दृश्यता भवेत्।
सामग्र्ये सति तन्तूनां नौकाद्याकर्षशक्तिवत्॥'[6]

---

१. अवैदिकदर्शनसङ्ग्रहे श्रीवाणीविलासयन्त्रालयमुद्रिते। वैभाषिकाणां द्वैविध्यमुक्तम् पाश्चात्त्यवैभाषिककाश्मीरवैभाषिकभेदेन 'तत्त्वरत्नावल्याम्' अद्वयवज्रप्रणीतायाम्।

२. ब्रह्मविद्याभरणे [Advaitamarjary Series] (२।२।१८)।

३. शिवार्कमणदीपिका, (२।२।१७)।

४. ब्रह्मविद्याभरणम्, (२।२।१८), भामती, (२।२।२८)।

५. अत्र सम्वृत्या = बुद्ध्या कृतं साम्वृतम्, 'विशकलितपरमाणुतत्त्वाच्छादकत्वात् सम्वृतिर्बुद्धिः', वेदान्तकल्पतरुः, (२।२।२८)।

६. शिवार्कमणिदीपिका, (२।२।१८)।

योगाचारास्तु, बाह्यार्थसद्भावेऽस्वारस्यं मन्यमाना विज्ञानमात्रमेव विश्वम्, न ततोऽन्यदस्तीति प्रतिपन्नाः[१]। अत एव, एते 'विज्ञानवादिनः' इत्युच्यन्ते।

ते पुनर्योगाचारापराभिधाना विज्ञानवादिनो द्विविधाः,

(क) साकारविज्ञानवादिनः, (ख) निराकारविज्ञानवादिनश्च।[२]

तत्र साकारविज्ञानवादिनां दिङ्नागधर्मकीर्तिप्रभृतीनां मते एकस्मिन्नेव विज्ञाने 'प्रमेयम्' 'प्रमाणम्', 'प्रमितिः'; 'प्रमाता' इत्यंशचतुष्टयमभ्युपगम्यते। तानि च प्रमेयादीनि बुद्धेराकारविशेषरूपाणि तया सहाभिन्नानि बुद्धिवदेव पारमार्थिकानि; तेषां परस्परं भेदस्तु कल्पितः।[३] आन्तरेषु बुद्धिगतेषु तेषु प्रमेयादिषु दोषवशेन बाह्यत्वाध्यवसानं भ्रमरूपम्।[४]

---

१. अवैदिकदर्शनसङ्ग्रहे।

२. 'योगाचारश्च द्विविधः—साकारनिराकारभेदेन'। —अद्वयवज्रकृता तत्त्वरत्नावली।

३. 'विभागमात्रं ज्ञेयाद्याकाराणां परिकल्पितम्, ज्ञेयादिरूपत्वं बुद्धेर्वास्तवमेव'।
—वेदान्तकल्पतरुः, (२।२।२८)

'सहोपलम्भनियमादभेदो नीलतद्धियोः।
भेदस्तु भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवोद्गते॥'
—(धर्मकीर्तेः), शिवार्कमणिदीपिका, (२।२।२७)।

(अस्योत्तरार्द्धे 'भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये', भामतीसर्वदर्शनसङ्ग्रहयोः पाठः)।

'सहोपलम्भनियमादभेदो नीलतद्धियोः।
अन्यच्चेत् सम्विदो नीलं न तद्भासेत संविदि॥
भासते चेत् कुतः सर्वं न भासेतैकसंविदि।
नियामकं न सम्बद्धं पश्यामो नीलतद्धियोः॥ —विवरणप्रमेयसङ्ग्रहः, (१।१)।

'अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते॥ – शिवार्कमणिदीपिका, (२।२।२७)।

अस्य द्वितीयपादे 'विपर्यासनिदर्शनैः' इति पाठान्तरं विज्ञानभिक्षुकृते साङ्ख्यप्रवचनभाष्ये, (१।२०)।

४. 'यदन्तर्ज्ञेयरूपं तद् बहिर्वदवभासते।' (दिङ्नागस्य)।

निराकारविज्ञानवादिनामाचार्यवसुवन्धुप्रभृतीनां मते विज्ञानमात्रमेव क्षणिकं निराकारं पारमार्थिकं तत्त्वम्; विज्ञाने प्रतिभासमानाः सर्वेऽप्याकारा आरोपिताः।[1] उल्लिखितं चैतन्मतं मण्डनमिश्रप्रणीत'विधिविवेक'-ग्रन्थस्य श्रीवाचस्पतिमिश्ररचितटीकायां न्यायकणिकायाम्[2]। आलोचितञ्च

---

तत्र साकारविज्ञानवादौ,
'षट्केन युगपद् योगात् परमाणोः षडङ्गता (षडंशता)।'
—वसुबन्धुकृता विज्ञप्तिमात्रतासिद्धिः, विंशतिका, १२
इत्यादिना न्यायेन परमाणूनामप्यनुपपत्तेः। चित्तमात्रमेवेदं चिताकारधारि ग्राह्य-ग्राहकभावविनिर्मुक्तं परनिरपेक्षप्रकाशं प्रकाशत इति प्रतिपन्नवान्। तदुक्तम्,
'चित्रमात्रं भो जिनपुत्रा यदुत वैधातुकम्' इति। तथा चाहुः कीर्तिपादाः,
'धियो नीलादिरूपत्वे वाह्योऽर्थः किन्निबन्धनः।
धियोऽनीलादिरूपत्वे बाह्योऽर्थः किन्निबन्धनः॥' इति। अन्यत्राप्युक्तम्,
'न चित्तेषु बहिर्भूता इन्द्रियार्थाः स्वभावतः। रूपादिप्रतिभासेन चित्तमेव हि भासते॥'
तस्माद् चित्तमेव चिताऽऽकारं परनिरपेक्षप्रकाशं प्रकाशत इति साकारविज्ञान-वादियोगाऽऽचारस्य विवृतिः।'
—अद्वयवज्रकृततत्त्वरत्नावली, (Gaekwad's Oriental Series No XI.)।

१. 'विज्ञप्तिमात्रमेवेदमसदर्थावधारणात्।
यथा तैमिरिकस्यासत्केशचन्द्रादिदर्शनम्॥'
—वसुबन्धुकृता विज्ञप्तिमात्रतासिद्धिः, विंशतिका, १।
निराकारवादियोगाचारस्तु चित्तमेवेदमनाकारं स्वसंवेदनरूपमिति मन्यते। तदुक्तम्,
बाह्यो न विद्यते ह्यर्थो यथा बालैर्विकल्प्यते। वासनालुठितं चित्तमर्थाभासं प्रवर्तते॥
यावदाभासते यच्च तन्मायैव च भासते। तत्त्वतो हि निराभासः शुद्धानन्तनभोनिभः॥
निष्प्रपञ्चो निराभासो धर्मकायो महामुनेः। रूपकायौ तदुद्भूतौ पृष्ठे मायैव तिष्ठते॥
इति विवृतिः। —अद्वयवज्रकृततत्त्वरत्नावली।
२. 'मिथ्यैव वर्तमानाभं न तु प्रत्यक्षमन्यथा। क्रमाक्रमौ न कल्पेते न प्रमेयं निरूप्यते॥'
—विधिविवेककारिकावृत्तिव्याख्या।

मतमिदं ब्रह्मसूत्रशाङ्करभाष्यव्याख्यायां भामत्यामानन्दगिरीयन्यायनिर्णये वेदान्तकल्पतरौ सर्वदर्शनसङ्ग्रहे चार्हतदर्शने।

माध्यमिकाः खलु विज्ञानवादेप्यस्वारस्यं मन्यमानाः[१] 'शून्यमेव तत्त्वम्' इति सिद्धान्तमातिष्ठन्तेः अत एव ते 'शून्यवादिनः' इति व्यपदेशं भजन्ते। तेषां सिद्धान्ते घटादयो विज्ञानान्ताः सर्वे पदार्थाः कल्पिताः, तेषां साम्व्यावहारिकं सत्त्वमाश्रित्य सर्वे व्यवहारा निर्वहन्ति[२]।

शून्यस्वरूपमुक्तं मध्यमककारिकायाम्,

'अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम्।
निर्विकल्पमनानार्थमेतत् तत्त्वस्य लक्षणम्।[३] इति

द्विविधञ्च सत्यं माध्यमिकानां सम्मतम्,

'द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना।
लोकसम्वृतिसत्यञ्च सत्यञ्च परमार्थतः॥[४]

---

१. तदुक्तम्, अवैदिकदर्शनसङ्ग्रहे शिवार्कमणिदीपिकायाञ्च,
नेष्टं तदपि धीराणां विज्ञानं पारमार्थिकम्। एकानेन स्वभावेनविरोधाद् वियदब्जवत्॥
(द्वितीयार्द्धे 'विरोधाद्' इत्यत्र 'वियोगाद्' इति पाठान्तरं शिवार्कमणिदीपिकायाम्)।

२. अवैदिकदर्शनसङ्ग्रहे १५ पृष्ठे।

३. तत्र नास्मिन् परप्रत्ययोऽस्तीत्यपरप्रत्ययं परोपदेशागम्यं स्वयमेवाधिगन्तव्यमित्यर्थः। ....एवम्, अपरप्रत्ययं भावानां यत् स्वरूपं तत् तत्त्वम्। एतच्च शान्तस्वभावम् = अतैमिरिककेशादर्शनवत् स्वभावविरहितमित्यर्थः, अत एव तत् प्रपञ्चैरप्रपञ्चितम्। प्रपञ्चो हि वाक् 'प्रपञ्चयत्यर्थान्' इति कृत्वा। प्रपञ्चैरप्रपञ्चितम् = वाग्भिरव्याहृतम् इत्यर्थः। निर्विकल्पं हि तत्। विकल्पश्चित्तप्रचारः, तद्रहितत्वात् तत् तत्त्वं निर्विकल्पकम्।....नाना अर्थोऽस्येति नानार्थम् = भिन्नार्थम्। न नानार्थम् = अनानार्थम् = अभिन्नार्थम् इत्यर्थः।....तदेवम्, अनानार्थता तत्त्वस्य लक्षणं वेदितव्यं शून्यतैकरसत्वात्। —चन्द्रकीर्तिटीका।

४. मध्यमककारिका २४।८।

'सर्वं एवायमभिधानाभिधेयज्ञानज्ञेयादिव्यवहारोऽशेषो लोकसम्वृति-सत्यमित्युच्यते।' 'परमश्चासावर्थश्चेति परमार्थः, तदेवंसत्यं परमार्थसत्यम्'।[1]

तच्च परमार्थसत्यं शून्यतत्त्वमेव। ते च माध्यमिका द्विविधा,

(क) मायोपमाद्वयवादिनः, (ख) सर्वधर्माप्रतिष्ठानवादिनश्चेति।[2]

तत्र मायोपमाद्वयवादिनस्तावत्, सदसदादिचतुष्कोटिविनिर्मुक्तं जगतस्तत्त्वमिति प्रतिपन्नाः।[3] तथाहि, 'सर्वं जगद् न सत्, बाधितत्वाद्, नासत्, प्रतीयमानत्वात्, नोभयात्मकम्, विरोधात्, नाप्यनुभयात्मकम्, असम्भवात्, किन्तु चतुष्कोटि विनिर्मुक्तं सर्वं शून्यमेव[4]।

तथा च सत्त्वादीनां पूर्वोक्तानामसम्भवाद् शून्यतायामेव पर्यवसानं जगतः। शून्यस्य सत्त्वेन प्रत्यक्षावमासः सद्व्यवहारविषयत्वादिकञ्च सम्वृति-महिम्ना। यया शून्यतत्त्वं सम्मीयते, सा सम्वृतिर्भ्रान्तिवासनारूपा[5]।

सर्वधर्माप्रतिष्ठानवादिनस्तु, जगतः शून्यत्वं समर्थयामासुः। तेषामयमाशयः, विश्वमिदं न नित्यम्, बाधितत्त्वात्। माप्युच्छेदशीलम्, स्थिरतया

---

१. चन्द्रकीर्तिटीका।

२. माध्यमिकोऽपि मायोपमाद्वयवादि-सर्वधर्माप्रतिष्ठानवादिभेदाद् द्विविधः।

—अद्वयवज्रकृता तत्त्वरत्नावली।

माध्यमिकानां द्वैविध्यमद्वयवज्रप्रणीतायां तत्त्वरत्नावल्यां प्रतिपादितम्, प्रसिद्धबौद्ध-निबन्धेषु नान्यत्र कुत्रचिदिति विदितमेतद् बहुदर्शिनां विदुषाम्।

३. 'न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्। चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः॥'

—तत्त्वरत्नावलीशिवार्कमणिदीपिका-(२।२।३०)ऽवैदिकदर्शनसङ्ग्रहेषु पद्यमेतदुद्धृतम्। अमलानन्दप्रणीतशास्त्रदर्पणे (२।२।६ अधि०) प्रथमार्द्धमेवास्य प्रदर्शितम्।

४. ब्रह्मसूत्रश्रीकण्ठभाष्ये (२।२।३०)।

अमलानन्दकृतशास्त्रदर्पणे (२।२।६ अधि०); अद्वयवज्रविरचितायां तत्त्वरत्नावल्यां चैवमेवोक्तम्।

५. शिवार्कमणिदीपिका, (२।२।३०)।

प्रत्यभिज्ञानात् । नाप्येतदुभयात्मकम्, विरोधात् । नाप्यनुभयात्मकम्, एकनिषेधस्येतरविधाननान्तरीयकत्वात् । तस्माद्, उक्तचतुष्कोटिविनिर्मुक्तं शून्यमेव विश्वस्य तत्त्वमिति पर्यवसितम्[१] ।

शून्यस्य नित्यत्वादिना प्रतीतिर्नित्यत्वादिव्यवहारविषयता च पूर्ववत् सम्वृतिमहिम्नैवेति मन्तव्यम् ।

तदेवं प्रसङ्गाद् बौद्धानां सिद्धान्तभेदाः संक्षेपेणोपदर्शिताः । कालस्तु बौद्धैर्नाङ्गीक्रियते ।

अत एवोक्तं तत्त्वत्रयभाष्ये वरवरमुनिना, 'कालो नास्तीति, बौद्धादिभिरभिधानात्[२]' इति ।

ब्रह्मविद्याभरणेऽपि, 'बौद्धानां मते क्षणपदेन घटादिरेव पदार्थो व्यवह्रियते, न तु तदतिरिक्तः कश्चित् क्षणो नाम कालोऽस्ति ।···क्षणिकः पदार्थं इति व्यवहारस्तु भेदकल्पनया[३]' इति ।

शिवार्कमणिदीपिकायामपि, 'बौद्धमते वस्तुतः कालो नास्ति । उद्यन्नेव स्वरसभङ्गुरो घटादिः क्षणपरिकल्यनामात्रनिमित्तं भवति । स च घटादिः स्वोदयविनाशपरिकल्पितक्षणवत्त्वात् क्षणिकोऽपि भवति, वपुष्माञ्छिलापुत्रक इतिवत् । वस्तुतः स्वव्यतिरिक्तक्षणाभावात् स्वयमेव क्षणोऽपि भवतीति तेषां प्रक्रिया[४] इति ।

'वडोदा'राजधान्याः प्रकाशिते नालन्दाविश्वविद्यालयमहास्थविरश्रीशान्तरक्षितविरचिते तत्त्वसङ्ग्रहाभिधे[५] बौद्धदर्शनग्रन्थेऽपि द्रव्यपदार्थं-

१. सर्वधर्माप्रतिष्ठानवादिनां त्वयं विचारः,

'न मतं शाश्वतं विश्वं न चोच्छेदि समीहितम् । शाश्वतोच्छिनोर्युग्मं नानुभयं विनोभयम् ।

सर्वस्मिन्नप्रतिष्ठानं वस्तुतत्त्वं विदुर्बुधाः ।' —अद्वयवज्रकृता तत्त्वरत्नावली ।

२. चौखम्बामुद्रिते ७९ पृष्ठे ।

३. २।२।२० ।

४. २।२।१९ ।

५. Gaekwad's Oriental Ceries No. XXX ।

परीक्षावसरे कालखण्डनयुक्तिः प्रतिपादिता दृश्यते। तत्र कालदिशोः खण्डनं सहैव कृतम्,

'विशिष्टसमयोद्भूतमनस्कारनिबन्धनम् ।
परापरादिविज्ञानं न कालान्न दिशश्च तत् ॥
निरंशैकस्वभावत्त्वात् पौर्वापर्याद्यसम्भवः ।
तयोः सम्बन्धिभेदाच्चेदेवं तौ निष्कलौ ननु ॥'[1]

अत्र कमलशीलकृतायां पञ्जिकायामभिहितम्, 'विशिष्टसमयः = पौर्वापर्यादिनोत्पन्नेष्वेवार्थेषु पूर्वापरादिसङ्केतः, तदुद्भूतो मनस्कारः = आभोगः, स निबन्धनमस्येति तथोक्तम्।' इति

एवञ्च अनयोः कारिकयोरयमाशयः पर्यवसितः, क्रमेणोत्पन्नेषु लोकानाम् 'अयं पूर्व' 'अयं परः' इति य उपदेशस्तेन प्रतिपत्तृणां मनसि कश्चन संस्कारविशेषो जायते, स एव 'आभोग'शब्देन व्यवह्रियते। तेन 'अयं पूर्वः', 'अयं परः' इत्यादिसङ्केतज्ञानजनितसंस्कारविशेषरूपेणाभोगेन जनानां वस्तुषु 'अयं पूर्वः 'अयं परः' इत्येवं विज्ञानमुत्पद्यते, एवञ्च कालिकदेशिकपरापरविज्ञानस्य कालदिग्भ्यां विनैवोपपत्तेः कालो दिक् च नैवाङ्गीक्रियेते।

किञ्च, कालदिशोर्निरवयवत्त्वेन तयोः स्वतः पौर्वापर्यं न सम्भवतः। यदि दिक्कालसम्बन्धिनो ये बाह्याध्यात्मिकाः भावाः प्रदीपशरीरादयो वर्तन्ते, तेषां पौर्वापर्यं आदाय कालदिशोः पौर्वापर्यं भविष्यत इत्युच्येत, तदा तैः प्रदीपशरीरादिभिरेव पौर्वापर्यव्यवहारनिर्वाहसम्भवेन तन्निर्वाहाय कालदिशोः कल्पनाऽपार्थिका इति।[2]

१. तत्त्वसङ्ग्रहः, (६२९-६३०)।

२. प्रतिपादितमेतत् कमलशीलेन तत्त्वसङ्ग्रहपञ्जिकायाम्,

'कालः पूर्वापरक्षणलवनिमेषकाष्ठाकलामुहूर्ताहोरात्रार्द्धमासादिप्रत्ययप्रसवहेतुः, दिक् च पूर्वोत्तरादिव्यवस्था हेतुरिष्यते। अयं भेदः सकलस्तयोर्न स्वात्मनि विद्यते। भेदेषु पुनरस्तीति व्यर्थैव तत्परिकल्पना।' इति। अत्रेदमवधेयम्,

शान्तरक्षितेन खलु प्रकारद्वयेन कालनामकस्यातिरिक्तपदार्थस्याभावः प्रतिपादितः। तत्र प्रथमतः पूर्वापरादिसंकेतप्रभवसंस्कारविशेषजनितवृद्धिविशेष एव कालव्यवहार

नागार्जुनाचार्यप्रणीतायां मध्यमककारिकायां तद्वृत्तौ च चन्द्रकीर्तिरचितायां कालपरीक्षानामक एकोनविंशतितमप्रकरणे कालो नाम नास्ति कश्चन पदार्थं इति निरूपितम्। आर्यदेवप्रणीतचतुश्शतकनामकग्रन्थे नवमाध्याये दशमकारिकायां चन्द्रकीर्तिनिर्मितायां च तदीयवृत्तौ कालपदार्थाभाव उपपादितः।

तथा च; सौगतसमये कश्चित् कालो नामातिरिक्तः पदार्थो नास्तीति सिद्धम्।

## जैनमतम्

जैनानां सिद्धान्ते खलु जीवाजीवभेदेन द्रव्यं विविधः[१]। तत्र अजीवः पुद्‌लधर्माधर्माकाशकालभेदेन पञ्चधा भिद्यते[२]। एतेषु जीवादयः पञ्च अस्तिकायशब्देन व्यवह्रियन्ते। कालस्यास्तित्वे सत्यपि प्रदेशाभावात्

---

हेतुर्नास्ति कश्चन कालपदार्थं इत्युपपादितम्। तदनन्तरञ्च, अतिरिक्तकालवादिभिः यैरुपाधिभिरवच्छिन्नस्य कालस्य क्षणादिनमासवर्षादिव्यवहारविषयताऽङ्गीक्रियते, त एवोपाधयः कालंव्यवहारे विषयतां भजन्ते, नास्ति तदतिरिक्तः कश्चन काल इत्युक्तम्। अत्रेदं द्वितीयं मतं साङ्ख्यतत्त्वकौमुदी सादृश्यमावहति। अनयोः पक्षयोः प्रथमस्तावद् वाह्यपदार्थाभिप्रायेण प्रतिपादितः, द्वितीयस्तु पक्षो बाह्यपदार्थसत्तामभ्युपेत्येति विवेकः।

१. नेमिचन्द्रकृतद्रव्यसङ्ग्रहे, उमास्वामिविरचिततत्त्वार्थसूत्रे पञ्चमाध्याये च। अत्रेदं मन्तव्यम्, जैनानां मते गुणादीनां द्रव्येण सह भेदाभेदस्वीकारात्, तेषां द्रव्येऽन्तर्भावमभिप्रेत्य द्रव्यविभाग एव कृतः। यद्यपि हरिभद्रप्रणीतषड्दर्शनसमुच्चये,

'जीवाजीवौ तथा पुण्यं पापमास्रवसंवरौ।
बन्धो विनिर्जरामोक्षौ नव तत्त्वानि तन्मते॥'

इति नवपदार्था जैनमते प्रतिपादिताः, तथापि जीवाजीवयोरेवान्येषां समावेशः सम्भवतीति सूचितं गुणरत्नसूरिणा तत्रत्यटीकायाम्।

२. द्रव्यसङ्ग्रहे १५, द्रव्यसङ्ग्रहवृत्तौ च।

कायत्वाभावेन अस्तिकायशब्दव्यवहार्यता नास्ति[1] ।

कालश्च द्विविधः,

(क) व्यवहारकालः, (ख) निश्चयकालश्चेति ।

व्यवहारकालश्च परिणामक्रियापरत्वापरत्वेन लक्ष्यते[2] । तदुक्तम्,

'व्यावहारिककालस्य परिणामस्तथा क्रिया ।
परत्वञ्चापरत्वञ्च लिङ्गान्याहुर्महर्षयः ॥'[3] इति ।

'जीवपुद्गलयोः[4] परिवर्तो नवजीर्णपर्यायः, तस्य या समयघटिकादिरूपा स्थितिः स्वरूपं यस्य स भवति द्रव्यपर्यायरूपो व्यवहारकालः ।'

'स्वकीयोपादानरूपेण स्वयमेव परिणममानानां पदार्थानां कुम्भकारचक्रस्याधस्तनशिलावद्, शीतकालेऽध्ययनेऽग्निवत् पदार्थपरिणतेर्यत् सहकारित्वम्, सा वर्तना भण्यते, सैव लक्षणं यस्य स वर्तनालक्षणः कालाणुद्रव्यरूपो निश्चयकालः ।'

'योऽसावनाद्यनिधनस्तथैवामूर्तो नित्यः समयाद्युपादानकारणभूतोऽपि समयादिविकल्परहितः कालाणुद्रव्यरूपः स निश्चयकालः । यस्तु सादिसान्त-

---

१. द्रव्यसङ्ग्रहे, (२३।२४)। हरिभद्रसूरिविरचितषड्दर्शनसमुच्चयटीकायां गुणरत्नप्रणीतायमपि प्रतिपादितः कालस्य 'अस्तिकाय'शब्दव्यवहार्यत्वाभावः । 'स (कालः) चास्तिकालो न भण्यते, एकसमयरूपस्य तस्य निष्प्रदेशत्वात् । आह च,
'तस्मान्मानुषलोकव्यापी कालोऽस्ति समय एक इह ।
एकत्वाच्च स कायो न भवति, कायो हि समुदायः ॥' —षड्दर्शनसमुच्चयटीका,

२. द्रव्यसङ्ग्रहे २१, द्रव्यसङ्ग्रहवृत्तौ च ।

३. तत्त्वार्थसारे, (३।३५) ।

४. पूर्यन्ते गलन्तीति पुद्गलाः = परमाणुसंघाः कायाः ।
—ब्रह्मसूत्रशाङ्करभाष्यरत्नप्रभा, (२।२।३३) ।

पूर्यन्ते गलन्तीति पुद्गलाः = परमाणवः,तत्समूहोऽत्र पृथिव्यादिरुक्तः ।
—आनन्दगिरीयन्यायनिर्णयः, (२।२।३३) ।

समयघटिकाप्रहरादिविवक्षितव्यवहारविकल्परूपस्तस्यैव द्रव्यकालस्य[१] पर्यायभूतः[२] स व्यवहारकालः।' 'यथाऽऽकाशद्रव्यमशेषाणां द्रव्याणामाधारः स्वस्यापि, तथा कालद्रव्यमपि परेषां परिणतिसहकारिकारणं[३] स्वस्यापि।'

कालस्य घटिकादिवसादिकार्यं प्रत्यक्षेण दृश्यते।[४]

अत्रेदं तत्त्वम्,

निश्चयकालोऽणुद्रव्यरूपो नित्योऽमूर्तः, स च पदार्थपरिणतौ सहकारिभूतोऽमूर्तत्वादेव निष्क्रियः घटिकादिवसादिरूपस्य स्थूलकालस्योपादानकारणरूपः, स च दिश्चयकालः स्वीयेन कार्येण व्यावहारिककालेनानुमेयः। व्यावहारिककालस्तु अणुरूपस्य निश्चयकालस्य कार्यभूतो घटिकामुहूर्तयामाहोरात्रादिरूपः समयशब्दवाच्यः प्रत्यक्षेण गृह्यते।

जैनानां मते लोकाकाशः; अलोकाकाशश्चेति द्विविध आकाशः[५]। धर्माधर्मौ कालः पुद्गला जीवाश्च लोकाकाशमध्ये वर्तन्ते। मोक्षावस्थायां जीवोऽलोकाकाशं प्रविष्टः सततमूर्ध्वगामी भवति। कालस्याणवः खलु लोकाकाश[६] एव विद्यन्ते,

'एकैकवृत्त्या प्रत्येकमणवस्तस्य ( = कालस्य) निष्क्रियाः।
लोकाकाशप्रदेशेषु रत्नराशिरिव स्थिताः॥'[७]

---

१. केचन जैनाचार्याः कालस्य द्रव्यत्वमेवाङ्गीचक्रुः, न तु पर्यायरूपतामपि, अन्यैस्तु कालस्य द्रव्यपर्यायोभयात्मतेव स्वीकृतेति व्यक्तं तत्त्वरत्नटीकायाम्।

२. पर्यायश्च जैनदर्शने द्रव्यस्यावस्थाविशेष उच्यते।

३. द्रव्यसङ्ग्रहवृत्तौ—२१-२२।

४. जैनमते कारणं त्रिविधम्, निर्वर्तकम्, निमित्तम् परिणामि चेति। निमित्तकारणस्यावान्तरविशेषोऽपेक्षाकारणम्, तत्र कालस्यापेक्षाकारणतैवेति कालवादिनां जैनाचार्याणां सिद्धान्तः।

५. आकाशास्तिकायो द्विविधः, (क) लोकाकाशः सांसारिकः (ख) अलोकाकाशो मुक्ताश्रयः।
ब्रह्मसूत्रशाङ्करभाष्यरत्नप्रभायाम् (२।२।३३), द्रव्यसङ्ग्रहवृत्तौ चैतदुक्तम्।

६. द्रव्यसङ्ग्रहे, २२।

७. तत्त्वार्थसारे, (३।४४)।

कालपदार्थश्च सर्वेषां जैनदार्शनिकानां न सम्मतः। तथाहि, श्रीशङ्कर-भगवत्पादैर्जैनमतप्रदर्शनाय 'एकस्मिन्नसम्भवाद्'[1] इति सूत्रे प्रत्यपादि;

'संक्षेपतस्तु द्वावेव पदार्थौ जीवाजीवाख्यौ। यथायोग्यं तयोरेवेतरान्तर्भावादिति मन्यन्ते। तयोरिममपरं प्रपञ्चमाचक्षते पञ्चास्तिकायो नाम जीवास्तिकायः, पुद्गलास्तिकाय; धर्मास्तिकायः; अधर्मास्तिकाय; आकाशास्तिकायश्चेति।'

अत्र जीवाजीवौ द्वौ प्रदर्श्य, तेषामेव, प्रकारान्तरेण पञ्चास्तिकाय-रूपेण प्रतिपादनं कृतम्। कालश्च पञ्चास्तिकायेभ्यो भिन्नः पृथक् प्रतिपादनार्होऽपि न प्रतिपादितः। यथायोग्यं तयोरेवेतरान्तर्भावाद् इत्युक्त्या एतेभ्योऽन्ये पदार्था न सन्तीति सूचितम्।

कुन्दकुन्दाचार्यप्रणीते 'पञ्चास्तिकायसमयसारे' चतुर्विंश्यां गाथायां निश्चयकालं प्रतिपाद्य, पञ्चविंश्यां गाथायां समयापरपर्यायं व्यवहारिककालं च निरूप्य षड्विंश्यां गाथायां कालस्य पुद्गलद्रव्येऽन्तर्भाव उपपादितः,

'णत्थि चिरं वा खिप्पं मत्तारहिदं तु सावि खलु मत्ता।
पुद्गलदव्वेण विणा तम्हा कालो पडुच्च भवो॥'

अस्याः संस्कृतच्छाया,

'नास्ति चिरं वा क्षिप्रं मात्रारहितं तु साऽपि खलु मात्रा।
पुद्गलद्रव्येण विना तस्मात्कालः प्रतीत्यभवः॥'

चिराचिरव्यवहारौ मात्रया = परिणत्या रहितौ न भवतः। सा च परिणतिरूपा मात्रा पुद्गलद्रव्येण रहिता न वर्तते, तस्मात् स्वपरिणामं प्रति पुद्गलद्रव्यस्यैकस्यैव कारणत्वसम्भावात्तदतिरिक्तस्य कालस्य प्रतीत्यभावेन नास्तिकालनामा कश्चित् पृथक्पदार्थ इत्यभिप्रायः।

इममेव पक्षं द्रव्यसङ्ग्रहवृत्तौ पूर्वपक्षत्वेन उपन्यस्यानन्तरं तत्खण्डनं कृतम्। तत्रायं पूर्वपक्षः,

'अथ मतम्, यथा कालद्रव्यं स्वस्योपादानकारणम्, परिणतेः सहकारि-

---

१. २।२।३३।

कारणञ्च भवति, तथा सर्वद्रव्याणि, कालद्रव्येण किं प्रयोजनम् ? इति'।

इत उत्तरम्, यद्यपि द्रव्यसङ्ग्रवृत्तौ अस्य पूर्वपक्षस्य खण्डनं कृतम्, तथापि केषाञ्चिज्जैनाचार्याणां मते कालपदार्थो नास्तीत्यनेनापि पूर्वपक्षग्रन्थेन सूच्यत एव।

कैश्चिज्जैनाचार्यैः कालो नाम द्रव्यं नाभ्युपेतम्, इति गुणरत्नसूरिणापि प्रतिपादितम्[१]। जैनानां तावद् द्वावाम्नायौ,

(क) दिगम्बराम्नायः, (ख) श्वेताम्बराम्नायश्च।

तत्त्वार्थसूत्रे क्वचिदाम्नायभेदेन पाठभेदः समुपलभ्यते,

'कालश्च'[२] इति सूत्रे श्वेताम्बराणाम् 'कालश्चेत्येके' इत्येवं पाठः। एवञ्च, कालपदार्थो जैनसिद्धान्ते न सर्वसम्मत इति सिद्धम्।

## कामशास्त्रमतम्

वात्स्यायनविरचितेकामसूत्रे यद्यपि कालस्यअर्थानर्थंजयपराजयसुखदुःख-हेतुत्वं प्रतिपादितम्,[३] तथापि तदीयस्वरूपपरीक्षा नैव कृता, परन्तु यशोधर-विरचितायां जयमङ्गलानामिकायां कामसूत्रव्याख्यायां कालस्य द्रव्यत्वं नित्यत्वञ्चाभिहितम्[४], 'कालो नाम द्रव्यपदार्थो नित्यः।'

जयमङ्गलायाञ्च शक्तिदेशकालसाधनानां परस्परसापेक्षाणां कार्यं प्रति

---

१. 'ये केचनाचार्याः कालं द्रव्यं नाभ्युपर्यान्ति, किन्तु धर्मादिद्रव्याणां पर्यायमेव। तन्मते धर्माधर्माकाशपुद्गलजीवाख्यपञ्चास्तिकायात्मको लोकः। ये तु, कालं द्रव्य-मिच्छन्ति तन्मते षड्द्रव्यात्मको लोकः, पञ्चानां धर्मादिद्रव्याणां कालद्रव्यस्य च तत्र सद्भावात्।' —षड्दर्शनसमुच्चयटीका रहस्यदीपिका गुणरत्नकृता।

२. ५।३८।

३. 'काल एव हि पुरुषार्थंनर्थयोर्जयपराजययोः सुखदुःखयोश्च स्थापयति।'
—कामशास्त्रे साधारणाधिकरणे।

४. 'तत्सर्वं कालकारितम्' इति सूत्रव्याख्यायाम्। —साधारणाधिकरणे।

जनकता प्रतिपादिता[१]।

एवञ्च, एतदीयमते कार्यमात्रं प्रति नित्यद्रव्यस्य कालस्य कारणता-स्वीकृता।

एतन्मतमपि वैशेषिकमतेनाऽभिन्नमिति प्रतिभाति।

## कालकारणिकमतम्

पुरा केचन चेतनकारणतावादमनङ्गीकृत्य स्वमत्यनुसारेण कालमेव जगत्कारणत्वेनाभ्युपगच्छन्ति स्म। स्वभाववादेन सह कालवादस्यैकत्रोपवर्ण-नात् 'कालवादिनो नास्तिकाः' इत्येव प्रतिभाति,

'स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमाणाः।'[२]

'स्वभाववादिनः = चार्वाकाः' इति वरदराजकृतन्यायकुसुमाञ्जलि-बोधिन्यां प्रथमस्तबकपञ्चमकारिकाव्याख्यानावसरे वर्णितम्, तत्साहचर्येण कालवादिनोऽपि परमेश्वरमनङ्गीकुर्वाणाः केचनेत्येव बुद्धिपथमधिरोहति। अत एव, श्वेताश्वतरोपनिषदि मन्त्रस्यास्य पश्चादर्धेन चेतनकारणतावादः समर्थितः,

'देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम्।'[३] इति

अन्यत्रापि माण्डूक्यकारिकायामुक्तम्, 'काल इति कालविदः'।[४] इति

अत्राप्यानन्दगिरीयव्याख्यानम्, 'कालः परमार्थ इति ज्योतिर्विदः' इति।

---

१. 'शक्तिदेशकालसाधननानि परस्परापेक्षाणि कार्यस्य साधकानि'। '—पुरुषकारपूर्वकत्वात् सर्वप्रवृत्तीनामुपायः प्रत्ययः', (१।२ अ०)।

२. श्वेताश्व०, ६।१।

३. (६।१), गौडपादप्रणीदमाण्डूक्यकारिकायामपि कालवादिनां मतमुपन्यस्तम्, 'कालात् प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः।' —१।८।

व्याख्यातञ्चैतदाचार्यशङ्करभगवत्पादैः, 'कालादेव सृष्टिरिति केचिद्' इति।

आनन्दगिरिणा तु, 'मतमिदं ज्योर्विदाम्' इत्युक्तम्।

४. (२।२४)।

कामसूत्रप्रथमाधिकरणद्वितीयाध्यायेऽप्युल्लिखितम्, 'काल एव पुनरप्येनं कर्तेति कारणिकाः ।' इति ।

अत्र जयमङ्गला, 'कालकारणिकाः ये कालकारणमधीयते' । इति

## डल्लणाचार्यमतम्

सुश्रुतसंहिताटीकायाम् आचार्यडल्लणेन कालस्य सत्त्वरजस्तमोरूपगुणत्रयात्मिकायां प्रकृतावेवान्तर्भाव उपपादितः[1], 'कालोऽपि चन्द्रार्कादिगतिक्रियालक्षणः, तत्र तु महाभूतानां परिणामविशेषाच्छीतोष्णादयो भवन्ति । तदुक्तम्,

'महाभूतविशेषांस्तु शीतोष्णद्वयभेदतः ।
'काल' इत्यध्यवस्यन्ति न्यायमार्गानुसारिणः ॥' इति

क्रियात्वेन रजोगुणपरिणामत्वाद् महाभूतपरिणामविशेषत्वाच्च न कालस्य प्रकृतेरन्यत्वम् ।' इति

तथा च, साङ्ख्याचार्याणां केषाञ्चिन्मतमेव डल्लणाचार्यैः कालविषये परिगृहीतमिति प्रतिभाति ।

## लोकायतमतम्

चार्वाकाः खलु प्रत्यक्षातिरिक्तं प्रमाणं नाङ्गीकुर्वन्ति, अतएवाकाशस्याप्रत्यक्षतया सत्तानभ्युपगमेन चत्वार्येव भूतानीति वर्णयन्ति[2] ।

---

१. शारीरस्थाने प्रथमाध्याये । —११ श्लोकव्याख्यायाम् ।

२. 'पृथ्वी जलं तथा तेजो वायुर्भूतचतुष्टयम् । आधारो भूमिरेतेषां मानं त्वक्षजमेव हि ॥'
— हरिभद्रकृतषड्दर्शनसमुच्चयः, (लोकायतमतम्) ।
लोकायतमते देहाकारपरिणतभूतचतुष्टयमेवात्मा, न ततोऽतिरिक्तः कश्चित्,
पृथ्व्यादिभूतसंहत्या तथा देहपरीणतेः । मदशक्तिः सुराङ्गेभ्यो यद्वत्तद्वच्चिदात्मनि ॥'
—षड्दर्शनसमुच्चयः, (लोकायतमतम्) ।

'अथ चत्वारि भूतानि भूमिवार्यनिलानलाः ।'[1] इति

तन्मते, 'इदानीं घटः' इत्यादिप्रत्यक्षबलेनैव कालसत्ता व्यवस्थापनीया, कालानङ्गीकारे 'इदानीं घटः' इत्यादिव्यवहाराणां निरालम्बनत्वप्रसङ्गात् । स च कालः किंस्वरूपः ? इति जिज्ञासायामेतन्मते तत्तद्वस्तूनामवस्थाविशेषः प्रत्यक्षसिद्धः काल इत्यङ्गीक्रियताम् ।

न च, एतन्मतेऽतिरिक्तः कालपदार्थोऽभ्युपगन्तुं शक्यः; तुल्ययुक्त्याऽऽकाशस्याप्यतिरिक्तस्य सिद्धिप्रसङ्गात् ।

कालविषये लोकायतसिद्धान्तः क्वचिदपि विस्पष्टतया व्युत्पादितोऽद्यावधि नास्मद्दृष्टिगोचरतां गत इति नैतद्विषयेऽस्माभिर्विशेष उपपादयितुं शक्यते; केवलमत्र स्वबुद्ध्यनुसारेणैतावन्मात्रं निदर्शितम् ।'

## चरकसंहितामतम्

चरकसंहितायां यद्यपि साङ्ख्यमतपक्षपातो विशेषतो दर्शितः, तथापि ग्रन्थारम्भे सूत्रस्थाने वैशेषिकतन्त्रसम्मतानि नव द्रव्याण्यनुक्रान्तानि,

'खादीन्यात्मा मनः कालो दिशश्च द्रव्यसङ्ग्रहः ।'[2] इति

एवञ्च तन्मते कालस्य द्रव्यत्वं सिद्धम् ।

तत्र चेतनाचेतनभेदेन द्रव्याणां द्वैविध्यमभिप्रेत्य चेतनाचेतनयोर्लक्षणे प्रदर्शिते, 'सेन्द्रियं चेतनं द्रव्यं निरीन्द्रियमचेतनम् ।' इति[3]

तथा च, आत्मन इन्द्रियसम्बन्धस्य विद्यमानत्वात् तस्य चेतनत्वम्, अपरेषां द्रव्याणामिन्द्रियसम्बन्धाभावाद् अचेतनत्वम् । इत्थञ्च 'कालस्याचेतनद्रव्यत्वम्' इति चरकसंहितासिद्धान्तः ।

अत्र, 'कालः' इत्येकवचनेन तस्यैकत्वं सूचितम् । तथा च कालविषये वैशेषिकसिद्धान्त एव चरकसम्मत इति प्रतिभाति ।

---

१. सर्वदर्शनसंग्रहलोकायतदर्शने । तर्कसंग्रहभास्करोदयामंगलवादे ।

२. सूत्रस्थाने (१।४८) । आकाशः, वायुः, तेजः, जलम्, पृथिवी इत्येतानि पञ्च; आत्मा, मनः, कालः, दिश इति चत्वारि इत्येवं नव द्रव्याणीति तात्पर्यम् ।

३. सूत्रस्थाने, (१।४८) ।

## वर्तमानकालाभाववादिमतम्

पुरातनाः केचन वादिनः 'वर्तमानः कालो नास्ति' इति प्रत्यपद्यन्त। तेषां सिद्धान्तो न्यायदर्शने सूत्रभाष्यवार्तिकादिषु, व्याकरणमहाभाष्ये चोपन्यस्तः पूर्वपक्षत्वेन। तत्र न्यायदर्शने तावत्,

'वर्तमानाभावः, पततः पतितपतितव्यकालोपपत्तेः।[1]'

इति वर्तमानकालाभावप्रतिपादकं सूत्रम्। अत्र भाष्यकारैः प्रतिपादितम्, 'वृन्तात् प्रच्युतस्य फलस्य भूमौ प्रत्यासीदतो यदूर्ध्वं स पतितोऽध्वा, तत्संयुक्तः कालः पतितकालः, योऽधस्तात् स पतितव्योऽध्वा, तत्संयुक्तः कालः पतितव्यकालः, नेदानीं तृतीयोऽध्वा वर्तते, यत्र 'पतति' इति वर्तमानः कालो गृह्येत, तस्माद् वर्तमानः कालो न विद्यते इति।' अत्र वार्तिकेऽपि निरूपितमेतत्।

अत्रत्यसूत्रभाष्यवार्तिकानामाशयः संक्षिप्योपपादितो वाचस्पतिमिश्रैर्न्यायवार्तिकतात्पर्यटीकायाम्,

'कारकव्यङ्ग्यः कालः, तस्य निष्पन्नतया व्यक्तिसाधनत्वोपपत्तेः। न तु क्रियाव्यङ्ग्यः, तस्याः साध्यतया असिद्धत्वाद् व्यक्तिं प्रति हेतुत्वाभावात्। तथा च, अतीतानागतमात्रदर्शनाद् वर्तमानाभावेन न त्रैकाल्यविषयमनुमानम्, तयोश्च पितापुत्रवत् परत्वापरत्ववद् ह्रस्वदीर्घवच्च परस्परापेक्षासिद्धिरन्तरेणाऽपि वर्तमानं कालम्' इति।

न्यायमञ्जर्यामपि अनुमानसूत्रे[2] संक्षिप्यैतदुक्तम्,

'वृक्षात् पततः पर्णस्य भूतभविष्यन्तावध्वानौ दृश्येते, न तु वर्तमानः। तस्माद्, वर्तमानकालो नास्तीति।'

व्याकरणमहाभाष्यकारैरपि 'वर्तमाने लट्'[3] इति सूत्रे वर्तमानकालाभाववादिनां मतमुपन्यस्तं सूत्रानुपपत्तिप्रतिपादनाय पूर्वपक्षरूपेण,

---

१. गौतमसूत्रे, (२।१।३७)।

२. १।१।५।

३. पा०, (३।२।१२३)।

'अपर आह नास्ति वर्तमानः काल इति ।'

अत्र कैयटोपाध्यायैरेतस्य मतस्योपपादनार्थमभिहितम्, 'निष्पन्नस्यार्थस्य भूतत्वादनिष्पन्नस्य भावित्वाद् निष्पन्नानिष्पन्नव्यतिरेकेण रूपान्तरस्याभावः ।' इति

पूर्वोक्तानामेतेषां ग्रन्थानां परस्परं सम्वादादध्यवसीयते, 'आसन् केचन पुरा वर्तमानकालाभाववादिनः' इति ।

महाभाष्ये वर्तमानकालाभाववादिनां मतप्रदर्शनाय 'अपि चात्र श्लोकानुदाहरन्ति' इत्युपक्रम्य, इमे श्लोकाः समुपन्यस्ताः,

'न वर्तते चक्रमिषुर्न पात्यते
न स्यन्दते सरितः सागराय ।
कूटस्थोऽयं लोको न विचेष्टितास्ति
यो ह्येवं पश्यन्ति सोऽप्यनन्धः ॥'

'मीमांसको मन्यमानो युवा मेधाविसम्मतः ।
काकं स्नेहानुपृच्छति किं ते पतितलक्षणम् ॥
अनागते न पतसि अतिक्रान्ते च काक न ।[1]
यदि सम्प्रति पतसि सर्वो लोकः पतत्ययम् ॥'
अनागतमतिक्रान्तं वर्तमानमिति त्रयम् ।
सर्वत्र च गतिर्नास्ति गच्छतीति किमुच्यते ॥[2] इति

---

१. अत्र नागेशेन 'काकन' इत्यत्र 'काकते' इति पाठं स्वीकृत्य, 'काकपर्यायस्य, 'काकता' इति शब्दस्य सम्बुद्धावेतद्रूपम्' इति व्याख्यातं लघुमञ्जूषायां लकारार्थविचारप्रकरणे । काश्यां सम्प्रति मुद्रिते महाभाष्यप्रदीपोद्द्योते 'काकना' इति पाठः प्रदर्शितः, व्याख्या च तत्र लघुमञ्जूषावद् दृश्यते । अनयोरुभयोरपि ग्रन्थयोर्नागेशप्रणीतत्वेन तयोर्विसम्वादो नोचित इति । महाभाष्यप्रदीपोद्द्योतेऽपि 'काकते' इत्येव पाठो युक्त इति प्रतिभाति ।

२. एषु श्लोकेषु प्रथमः श्लोक आत्मनः क्रियाश्रयत्वाभावबोधकोऽपि आपातार्थमादाय क्षणभङ्गवादिना स्वपक्षसाधकत्वेनोपन्यस्तः, द्वितीयतृतीयश्लोकौ पदार्थानां स्थिर-

एताश्च कारिका अधुनोपलभ्यमानेषु ग्रन्थेषु क्वचिदपि नोपलभ्यन्ते। यैरयं सिद्धान्त आस्थितः, तेषामेव ग्रन्थान्तर्वर्तिन्य इमाः कारिकाः स्युः, स च ग्रन्थोऽधुना लिलुप्त इति सम्भवनामात्रं मनसि विपरिवर्तते।

॥ इति कालसिद्धान्तदर्शिनी समाप्ता ॥

---

त्वेऽपि वर्तमानकालाभावप्रतिपादकौ, पूर्ववर्तिश्लोकत्रयोक्तस्यार्थस्य दार्ढ्याय चतुर्थश्लोक उपन्यस्त इति नागेशमहाशयैर्महाभाष्यप्रदीपोद्द्योते प्रतिपादितम्।

अत्रत्यनागेशमहाशयव्याख्यानुसारेण 'वर्तमानकालाभाववादिनो बौद्धाः' इति पर्यवस्यति। यद्यपि बौद्धमते स्वतन्त्रस्य कालपदार्थस्याभावः पूर्वं प्रतिपादितः, तथापि येषु घटादिषु क्षणिकेषु पदार्थेषु कालव्यवहारः सौगतैरभ्युपेयते, तेषु भूतभविष्यत्कालव्यवहारसम्भवेऽपि वर्तमानकालव्यवहारो न सम्भवतीति तात्पर्यं सौगतानाम्, इति मन्तव्यम्, अत एव मध्यमककारिकायामाचार्यनागार्जुनप्रणीतायां गतिपरीक्षादिप्रकरणेषु भङ्ग्या वर्तमानकालाभाव उपपादितो दृश्यते।